कदा मृगेन्द्रस्कन्धं तं प्रणयप्रवणं पुनः ।
पश्यामि कान्तमित्युक्तं ममाप्युत्कण्ठितं मनः ॥२५॥
मञ्जरीजालवलितास्तरुं वल्ल्यः स्वकं पतिम् ।
न मुञ्चन्ति क्षणमिति ममाप्युत्कण्ठितं मनः ॥२६॥
इमे मन्दाश्चमरुत एते च शशिनः कराः ।
वनराजय एताश्च ममाप्युत्कण्ठयन्त्यहो ॥२७॥
हे चित्त मुधैवान्तः किं त्वं ताराडवितं स्थितम् ।
सा व्योमनिर्मला साधो क्व ते याता विवेकिता ॥२८॥
अथवा चित्त भर्तारं स्वं प्रत्युत्कण्ठसे सखे ।
तिष्ठोत्कराठाभिवलितं किं समुत्कण्ठितेन मे ॥२९॥
किं वृथोत्कराठसे वामे भर्ता यातो जरां भवेत् ।
तपस्वी कृशगात्रश्च भवेन्निर्वासनस्तथा ॥
मनो राज्याद्यभोगेभ्यो मन्ये ऽस्यामूलतां गतम् ।
वासनालतिका प्रावृण्नदी नदगता यथा ॥३०॥
एकान्त-रत एकात्मा नीरसः शान्तवासनः ।
मन्ये भवति मे भर्ता शुष्कवृक्षसमस्थितिः ॥३१॥
तथापि चित्त कोत्कराठा भवतोत्कण्ठयान्वितम् ।
मतिमुद्बोध्य योगेन श्लेषयिष्याम्यहं पतिम् ॥३२॥
प्रमृष्टकलनं भर्तुः समीकृत्य मनो मुनेः ।
राज्य एव नियोक्ष्यामि निवत्स्यावः सुखं चिरम् ॥३३॥

अहो नु चिरकालेन मनोरथमिमं शुभम् ।
अहमासादयिष्यामि यद्भर्ता समचिन्ततः ॥३४॥
समत्रानन्दवृन्दानामेतदेवोपरि स्थितम् ।
यत्समानमनोवृत्तिसङ्गमास्वादने सुखम् ॥३५॥
इति ध्यानपरा व्योम्ना चूडालोल्लङ्घ्य पर्वतान् ।
देशानब्धीन्दिगन्तांश्च प्राप मन्दरकन्दरम् ॥३६॥
वनैकदेशे कस्मिंश्चित् कृतपर्णोटजे पतिम् ।
दृष्ट्वा योगेन बुबुधे देहान्तरमिवास्थितम् ॥३७॥
हारकेयूर-कटक-कुण्डलादिविभूषितः ।
अभवन्मेरुकान्तिर्यस्तमेवात्र ददर्श सा ॥३८॥
कृशाङ्गं कृष्णवर्णं च जीर्णपर्णमिव स्थितम् ।
कज्जलाम्बुभरस्नातं भृङ्गीशमिव निःस्पृहम् ॥३९॥
चीराम्बरधरं शान्तमेकाकिनमवस्थितम् ।
स्थलीनिषण्णं पुष्पाणि प्रथयन्तं जटाङ्कितम् ॥४०॥
तमालक्यानवद्याङ्गी चूडाला पीवरस्तनी ।
किंचिज्जातविषादैवमुवाचात्मनि चेतसा ॥४१॥
अहो नु विषमं मौर्ख्यं तदनात्मज्ञातात्मकम् ।
एवंविधाः समायान्ति दशा मौर्ख्यप्रसादतः ॥४२॥
अयं स राजा लक्ष्मीवान् यतो मेऽतिप्रियः पतिः ।
हृदि मोहघनत्तण्णामिमामभ्यागतो दशाम् ॥४३॥

तदवश्यमिहाद्यैव नाथं विदितवेद्यताम् ।
नयाम्यत्र न संदेहो भोगमोक्षश्रियं तथा ॥४४॥
इदं रूपं परित्यज्य रूपेणान्येन केनचित् ।
सकाशमस्य गच्छामि बोधं दातुमनुत्तमम् ॥४५॥
बालेयं मम कान्तेति मदुक्तं न करोत्यलम् ।
तस्मात् तापसरूपेण बोधयामि पतिं क्षणात् ॥४६॥
भर्ता कषायपाकेन परिपक्वमतिः स्थितः ।
चेतस्यस्याद्य विमले स्वं तत्वं प्रतिबिम्बति ॥४७॥
इति संचिन्त्य चूडाला बभूव द्विजदारकः ।
भर्तुरभ्याजगामाग्रं मन्दस्मितलसन्मुखी ॥४८॥
ददर्श द्विजपुत्रं तं पुरो यातं शिखिध्वजः ।
वनान्तरादुपायातं तपोमूर्तिमिवास्थितम् ॥४९॥
द्रवत्कनकगौराङ्गं मुक्ताहारविभूषितम् ।
शुक्लयज्ञोपवीताङ्गम् शुक्लाम्बरयुगावृतम् ॥५०॥
कुन्तलव्याप्तमूर्धानं सालिमालमिवाम्बुजम् ।
भासयन्तं प्रदेशं तं शारीरैर्दीप्तिमण्डलैः ॥५१॥
कुण्डलाभूषितमुखं नवमर्कमिवोदितम् ।
शिखासंप्रोतमन्दारं शृङ्गस्थेन्दुमिवाचलम् ॥५२॥
कान्तोपशान्तवपुषमूर्जितं विजितेन्द्रियम् ।
हिमाभभस्मतिलकं भूषितालोकसुन्दरम् ॥५३॥

तमालोक्य द्विजसुतं समुत्तस्थौ शिखिध्वजः ।
देवपुत्रागमधिया संपरित्यक्त-पादुकः ॥५४॥
देवपुत्र नमस्कार इदमासनमास्यताम् ।
इत्यस्य दर्शयामास पाणिना पत्रनिष्टरम् ॥५५॥
ददौ च द्विजपुत्रस्य पुष्पमुष्टिं करोत्करे ।
चन्द्रः कुमुदखण्डस्य प्रालेयमिवपल्लवे ॥५६॥
हे राजर्षे नमस्तुभ्यमिति द्विजसुतोऽवदत् ।
गृहीत्वा कुसुमान्यस्माद्विवेश पत्रविष्टरे ॥५७॥

( शिखिध्वज उवाच )

देवपुत्र महाभाग कुत आगमनं कृतम् ।
दिवसः सफलो मन्ये यत्त्वामद्यास्मि दृष्टवान् ॥५८॥
इदमर्घ्यमिदं पाद्यं पुष्पाणीमानि मानद ।
इमा प्रग्रथिता माला गृह्यन्तां भद्रमस्तु ते ॥५९॥

( श्री वसिष्ठ उवाच )

इत्युक्त्वा पाद्यमर्घ्यं च मालां पुष्पाणि चानघ ।
शिखिध्वजस्तदिष्टायै ददौ देव्यै यथाखिलम् ॥६०॥

( चूडालोवाच )

सुबहूनि परिभ्रान्तो भूतलायतनान्यहम् ।
त्वत्तः पूजा यथा प्राप्ता मयेयं न तथान्यतः ॥६१॥

असिधारासमं सौम्य शान्तव्रतमिदं तव।
स्फीतं तद्राज्यमुत्सृज्य महावननिषेवणम् ॥६२॥

( शिखिध्वज उवाच )

जानासि भगवन् सर्वं देवस्त्वं कोऽत्रविस्मयः।
श्रियैव लोकोत्तरया ज्ञायसे चिन्हरूपया ॥६३॥
एतान्यङ्गानि ते चन्द्राद् घटितानीति मे मतिः।
अथवा किं समालोकादमृतेनेव सिंचसि ॥६४॥
अस्ति मे दयिता कान्ता पाति मद्राज्यमद्य तत्।
तवेव तस्या दृष्टानि तान्यङ्गानीह सुन्दर ॥६५॥
जीवितं याति साफल्यं स्वमभ्यागतपूजया।
देवादप्यधिकं पूज्यः सतामभ्यागतो जनः ॥६६॥
तत्कस्त्वं कस्य पुत्रस्त्वं किमायातोऽस्यनुग्रहात्।
एतन्मे संशयं छिन्धि विमलेन्दुसमानन ॥६७॥

( चूडालोवाच )

साधो सोऽहमयं कुम्भः पौत्रोऽहं पद्मजन्मनः।
पुत्रोऽहं नारदमुनेः कुम्भनामास्मि कुम्भजः ॥६८॥
निवसाम्यब्जजपुरे पित्रा सह यथासुखम्।
चत्वारः सुहृदो वेदा मम लीलाविलासिनः ॥६९॥
मातृष्वसा मे गायत्री मम माता सरस्वती।
ब्रह्मलोके मम गृहं पौत्रस्तत्रास्मि सुस्थितः ॥७०॥

अद्याकाशपथा गच्छन् दृष्टवांस्त्वामहं पुरः ।
इह तेनागतोऽस्म्यङ्ग सर्वं कथितवानिति ॥७१॥
त्वं मे कथय हे साधो कस्त्वमद्रौ करोषि किम् ।
कियत्पर्यवसानेयं भवतो वनवासिता ॥७२॥

( शिखिध्वज उवाच )

देवपुत्रोऽसि जानासि सर्वमेव यथास्थितम् ।
जानतोपि हि मामार्य कथयाम्येव ते मनाक् ॥७३॥
शिखिध्वजोऽहं भूपालस्त्यक्त्वा राज्यमिहास्थितः ।
भृशं भीतोस्मि तत्वज्ञ संसृतौ जन्मतः पुनः ॥७४॥
सुखं पुनः पुनर्दुःखं पुनर्मरणजन्मनी ।
भवतस्तेन तप्येऽहं तत्वज्ञ वनवीथिषु ॥७५॥
भ्रमन्नपि दिगन्तेषु चरन्नपि परन्तपः ।
नासादयामि विश्रान्तिमेकां निधिमिवाधनः ॥७६॥
अयत्नोप्यफलोऽप्येको ह्यपूर्णोऽप्यस्तसंगतिः ।
शुष्याम्यत्र वने साधो घुणक्षुण्ण इव द्रुमः ॥७७॥
इमामखण्डितां सम्यक् क्रियां संपादयन्नपि ।
दुःखाद् गच्छामि दुःखौघममृतं मे विषं स्थितम् ॥७८॥

( चूडालोवाच )

पितामहमहं पूर्वं कदाचित् पृष्टवानिदम् ।
यत्क्रिया-ज्ञानयोरेकं श्रेयस्तद् ब्रूहि मे प्रभो ॥७९॥

( ब्रह्मोवाच )

ज्ञानं हि परमं श्रेयः कैवल्यं तेन वेत्त्यलम् ।
कालातिवाहनायैव विनोदायोदिता क्रिया ॥८०॥
अलब्धज्ञानदृष्टीनां क्रिया पुत्र परायणम् ।
यस्य नास्त्यम्बरं पट्टं कम्बलं किं त्यजत्यसौ ॥८१॥

( चूडालोवाच )

ज्ञानमेवपरं श्रेय इति ब्रह्मादयोऽपि ते ।
प्राहुर्महान्तो राजर्षे त्वं किमज्ञानवान्स्थितः ॥८२॥
इतः कमण्डलुरितो दण्डकाष्ठमितो बृसी ।
इत्यनर्थविलोसेऽस्मिन् रमसे किं महीपते ॥८३॥
कोहं कथमिदं जातं कथं शाम्यति चेति भोः ।
राजन्नावेक्षसे कस्मात् किमज्ञ इव तिष्ठसि ॥८४॥
कथं बन्धः कथं मोक्ष इति प्रश्नानुदाहरन् ।
पारावारविदां पादान् कस्माद्राजन्न सेवसे ॥८५॥
साधूनां समदृष्टीनां परिप्रश्नेन सेवया ।
संगमेन च सा युक्ति लभ्यते मुच्यते यया ॥८६॥

( श्री वसिष्ठ उवाच )

कान्तया देवरूपिण्या तयैवं प्रतिबोधितः ।
अश्रुपूर्णमुखो वाक्यं शिखिध्वज उवाच ह ॥८७॥

( शिखिध्वज उवाच )

अहो नु बोधितोऽस्म्यद्य चिरात् सुरसुत त्वया ।
मौर्ख्यादार्यसमासङ्गं मुक्त्वाहमवसं वने ॥८८॥
गुरुस्त्वं मे पिता त्वं मे मित्रं त्वं मे वरानन ।
शिष्यो नमस्करोम्यद्य पादौ तव कृपां कुरु ॥८६॥
यदुदारतमं वेत्सि यस्मिन् ज्ञाते न शोच्यते ।
भवामि निर्वृतो येन तद् ब्रह्मोपदिशाशु मे ॥६०॥

( चूडालोवाच )

यद्युपादेयवाक्योऽहं राजर्षे तद्वदामि ते ।
यथाज्ञानमिदं किंचिन्न वक्ष्ये स्थाणु काकवत् ॥६१॥
अनुपादेयवाक्यस्य वक्तुः पृष्टस्य लीलया ।
अजन्त्यफलतां वाचस्तमसीवाक्षसंविदः ॥६२॥

( शिखिध्वज उवाच )

यद् वक्षि तदुपादेयं मया विधिरिव श्रुतेः ।
अविचारितमेवाशु सत्यमेतद् वचो मम ॥६३॥

( चूडालोवाच )

यथा बालः पितुर्वाक्यं मुक्तहेतूपपादनम् ।
आदत्ते हि तथैव त्वं गृहाणैतद्वचो मम ॥६४॥

श्रवणानन्तरं बुद्ध्या शुभमित्येव भावयन् ।
शृणु गीतमित्र त्यक्त्वा हेत्वर्थित्वं वचो मम ॥६५॥
( इति शिखिध्वजावबोधो नाम पंचमः सर्गः )

VI

( चूडालोवाच )

यदुक्तं नयशालिन्या तया विदितवेद्यया ।
तदा चूडालया ज्ञानं तत्कस्मान्नोररीकृतम् ॥१॥
सा हि तत्त्वविदां मुख्या यद् वक्ति करोति च ।
तत्सर्वं सत्यमेवाङ्ग तदनुष्ठेयमादरात् ॥२॥
अथ चेद् वचनं तस्यास्त्वया नानुष्ठितं नृप ।
तत्सर्वसंपरित्यागः कस्मान्न निपुणीकृतः ॥३॥

( शिखिध्वज उवाच )

राज्यं त्यक्तं गृहं त्यक्तं देशस्त्यक्त स्तथाविधः ।
दारास्त्यक्तास्तथाप्यङ्ग सर्वत्यागो न किं कृतः ॥४॥

( चूडालोवाच )

धनं दारा गृहं राज्यं भूमिश्छत्रं च बान्धवाः ।
इति सर्वं न ते राजन् सर्वत्यागो हि कस्तव ॥५॥
तवास्त्येवापरित्यक्तः सर्वस्माद् भाग उत्तमः ।
तं परित्यज्य निःशेषमायास्यसि विशोकताम् ॥६॥

( शिखिध्वज उवाच )

राज्यं चेन्मम नो सर्वं तत्सर्वं वनमेव मे ।
शैलवृक्षादि गुल्माढ्यं तदप्येतत्त्यजाम्यहम् ॥७॥
सवृक्षाद्रिवनश्वभ्राद् विपिनादपि वासना ।
परित्यक्ता मयानूनं परित्यागः स्थितो मम ॥८॥

( चूडालोवाच )

अद्रेस्तटं वनं श्वभ्रं सलिलं पादपस्थलम् ।
इत्यादि तव नो सर्वं सर्वत्यागः कथं तव ॥९॥
तवास्त्येवापरित्यक्तः सर्वस्माद्भाग उत्तमः ।
तं परित्यज्य निःशेषं परामायास्यशोकताम् ॥१०॥

( शिखिध्वज उवाच )

एतच्चेन्मम नो सर्वं तत्सर्वं स्वाश्रमो मम ।
वापीस्थलोटजयुतस्तमेवाशु त्यजाम्यहम् ॥११॥
सवृक्षोटजवीरुत्काद्वासना स्वाश्रमादपि ।
परित्यक्ता मया नूनं सर्वत्यागः स्थितो मम ॥१२॥

( चूडालोवाच )

वृक्षो वापी स्थलं गुल्ममुटजं व्रततीवृतिः ।
इति किंचिन्न ते सर्वं सर्वत्यागः कुतस्तव ॥१३॥

तवास्त्यन्योऽपरित्यक्तः सर्वस्माद् भाग उत्तमः ।
तं परित्यज्य निःशेषं परामायास्यशोकताम् ॥१४॥

( शिखिध्वज उवाच )

एतच्चेन्मम नो सर्वं तत्सर्वं भाजनादि मे ।
चर्मकुड्यकुटीरादि तत्तावत् संत्यजाम्यहम् ॥१५॥

श्री वसिष्ठ उवाच

इत्युक्त्वा स समुत्तस्थावविक्षुब्धमतिः शमी ।
विष्टरादवदातात्मा श्रृङ्गादिव शरद्घनः ॥१६॥
कुम्भस्त्वालोकयन्नेव तत्क्रियाः सस्मितः स्वयम् ।
आसने लोककार्येषु स्वस्यन्दन इवांशुमान् ॥१७॥
यत्करोति करोत्वेतदस्यैतत्पावनं परम् ।
इति तूष्णीं स्थितः कुम्भः शिखिध्वजमवैक्षत ॥१८॥
शिखिध्वजस्तु तत्सर्वं भाण्डोपस्करमाश्रामात् ।
तत्संस्थाप्येन्धनैः शुष्कैर्ज्वालयामास पावकम् ॥१९॥
एतावन्तं मया कालं वृत्ता यत् त्वं पतिप्रिये ।
अजातबुद्धिभेदेन तेनैव कृतमस्तु ते ॥२०॥
इत्यक्षमालां ज्वलने चिक्षेपोक्त्वा शिखिध्वजः ।
कल्पान्ताभ्राविव व्योम तारालीं पवनोऽमलाम् ॥२१॥
साधो कमण्डलो सम्यङ्‌ न ते प्रतिकृतं कृतम् ।
साधुत्वस्य च सर्वस्य त्वमेव परमास्पदम् ॥२२॥

येनैव वह्निना देहं संशोध्याभ्यागतोसि माम् ।
तेनैवगच्छ हे मित्र पन्थानः सन्तु ते शिवाः ।
इत्युक्त्वा श्रोत्रियायैव कमण्डलुमदात्तदा ॥२३॥
अथोत्थाय ददाहासौ शुष्कं तत्तृणमन्दिरम् ।
अज्ञेन स्वेन मनसा वृथा संकल्पकल्पितम् ॥२४॥
ददाह च स चिक्षेप तत्याज च बभञ्ज वा ।
भाण्डजातं स्ववसनं भोजनाद्यपि तुष्टवत् ॥२५॥
स बभूवाश्रमस्तस्य दृष्टनष्टजनस्थितिः ।
वीरभद्रबलध्वस्तदक्षयज्ञाश्रमोपमः ॥२६॥
आश्रमात्ते मृगगणा स्त्यक्तरोमन्थमुद्ययुः ।
साम्रिदाहात्पुरवराद् भीतभीतजना इव ॥२७॥
भाण्डजातं दहत्यग्नौ सहशुष्केन्धनेन तत् ।
केवलाकृतिरस्नेह स्तुष्टिमानाह भूपतिः ॥२८॥

( शिखिध्वज उवाच )

वासनां तत्र संत्यज्य सर्वत्यागो स्थितो ह्यहम् ।
अहो नु चिरकालेन देवपुत्र प्रबोधितः ॥२९॥
यावद्यावत्प्रहीयन्ते विविधा बन्धहेतवः ।
तावत्तावत्समायाति परमां निर्वृतिं मनः ॥३०॥
दिगम्बरो दिक्सदनो दिक्समोऽयमहं स्थितः ।
देवपुत्र महात्यागात् किमन्यदवशिष्यते ॥३१॥

( कुम्भ उवाच )

सर्वमेव न संत्यक्तं त्वया राजन् शिखिध्वज ।
सर्वत्यागपरानन्दे मा मुधाभिनयं कुरु ॥३२॥
तवास्त्येवापरित्यक्तः सर्वस्माद्भाग उत्तमः ।
यं परित्यज्य निःशेषं परामाप्नास्यशोकताम् ॥३३॥

( शिखिध्वज उवाच )

इन्द्रियव्यालसंघातो रक्तमांसमयाकृतिः ।
शिष्यते सर्वसंत्यागे देहो मे देवतात्मज ॥३४॥
तदुत्थाय पुनर्देहं भृगुपातादविघ्नतः ।
विनाशात्मकतां नीत्वा सर्वत्यागी भवाम्यहम ॥३५॥

( श्री वसिष्ठ उवाच )

इत्युक्त्वा देहमग्रस्थे श्वभ्रे त्यक्तुमसौ जवात् ।
करोति यावदुत्थानं तावत्कुम्भ उवाच ह ॥३६॥

( कुम्भ उवाच )

राजन् किमिति देहं त्वं निरागस्कं महावटे ।
त्यजस्यज्ञो हि वृषभः कुपितो हन्ति तर्णकम् ॥३७॥
जड़ो वराको मूकात्मा तपस्वी देहको ह्ययम् ।
न कश्चन तवैतस्मिन् मा मुधैव तनुं त्यज ॥३८॥
क्षोभयत्यन्य एवैनं निग्रहार्हो मुहुर्बलात् ।
तपस्विनं यथैकान्तं संस्थितं मत्ततस्करः ॥३९॥

वातः फलशिरःपुष्पपातनं कुरुते स्फुरन् ।
तरुणा साधुना साधोरपराद्धं किमात्मनः ॥४०॥
त्यक्तेनापि शरीरेण किल तामरसेक्षण ।
सर्वत्यागो न ते याति निष्पत्तिं विषमो हि सः ॥४१॥
येनायं क्षोभ्यते देहो मत्तेभेनेव पादपः ।
तत्संत्यजसि चेत्पापं तन्महात्यागवान् भवान् ॥४२॥

( शिखिध्वज उवाच )

केनायं चाल्यते देहः किं बीजं जन्मकर्मणाम् ।
कस्मिंस्त्यक्ते परित्यक्तं सर्वं भवति सुन्दर ॥४३॥

( कुम्भ उवाच )

साधो न देहत्यागेन न राज्यत्यजनेन च ।
न चोटजादिशोषेण सर्वत्यागो भवेन्नृप ॥४४॥
यत्सर्वं सर्वतो यच्च यस्मिन् सर्वैककारणे ।
सर्वस्मिन्संपरित्यक्ते सर्वत्यागः कृतो भवेत् ॥४५॥

( शिखिध्वज उवाच )

सर्वं सर्वगतं सर्वहेयं त्याज्यं च सर्वदा ।
सर्वं किमुच्यते ब्रूहि सर्वतत्त्वविदांवर ॥४६॥

( कुम्भ उवाच )

साधो सर्वगताकारं जीवप्राणादिनामकम् ।
न जडं नाजडं भ्रान्तं चित्तं सर्वमिति स्मृतम् ॥४७॥
पादपः पवनेनेव भूकम्पेनेव पर्वतः ।
भस्त्रा भस्त्राभेरणायं देहश्चित्तेन चाल्यते ॥४८॥
चित्ते त्यक्ते लयं याति द्वैतमैक्यं च सर्वतः ।
शिष्यते परमं शान्तमच्छमेकमनामयम् ॥४९॥
येन सर्वं परित्यक्तं तस्मिञ्छून्येपि संस्थितम् ।
जगत् सर्वं त्रिकालस्थं तन्तौ मुक्तावली यथा ॥५०॥
अस्नेहेनेव दीपेन येन सर्वं समुज्झितम् ।
सस्नेहेनेव दीपेन तेन सर्वं प्रकाशितम् ॥५१॥
स्थितं सर्वं परित्यज्य यः शेतेऽस्नेहदीपवत् ।
स राजते प्रकाशात्मा समः सस्नेहदीपवत् ॥५२॥
सर्वत्यागरसापाने जरामरणभीतयः ।
न काश्चन प्रबाधन्ते खस्येव व्योमलेखिका ॥५३॥
सर्वं त्यजति यस्तस्य सर्वमेवोपतिष्ठते ।
यथैवाम्बु विशत्यग्नौ तथैवायाति वारिधौ ॥५४॥
सर्वत्यागवशादेव हतकाले कलावपि ।
शाक्येन विगताशङ्कं मुनिना मेरुवत् स्थितम् ॥५५॥
सर्वं परित्यज्य महास्वभाव, त्यजस्यथो येन च तद्विहाय ।
त्यागाभिमानं च मलं विमुच्य, विमुक्तरूपो भव भूमिपाल ॥५६॥

( श्रीवसिष्ठ उवाच )

एवंवदति वै कुम्भे चित्तत्यागं मुहुर्मुहुः ।
अन्तर्विचारयन् सौम्यो राजा वचनमब्रवीत् ॥५७॥

( शिखिध्वज उवाच )

हृदयाकाशविहगो हृदयद्रुममर्कटः ।
भूयोभूयो निरस्तं हि समभ्येत्येव मे मनः ॥५८॥
चित्तस्यादौ स्वरूपं मे यथावद् भगवन् वद ।
ततश्चित्तपरित्यागं यथावद् वद मे प्रभो ॥५९॥

( कुम्भ उवाच )

वासनैव महाराज स्वरूपं विद्धि चेतसः ।
चित्तशब्द स्तुपर्यायो वासनाया उदाहृतः ॥६०॥

( शिखिध्वज उवाच )

स्वरूपं वेद्मि चित्तस्य वासनामयमाकुलम् ।
त्यागः स मन्ये दुःसाध्यो वज्रनिर्गिलनादपि ॥६१॥
संसृत्यामोदपुष्पस्य दुःखदाहानलस्य च ।
जगदब्जमृणालस्य मोहमारुतखस्य च ॥६२॥
शरीरयन्त्रवाहस्य हृत्पद्मभ्रमरस्य च ।
अयत्नाच्चेतसस्त्यागो यथा भवति तद्वद ॥६३॥

( कुम्भ उवाच )

सर्वनाशोऽस्य यः साधो चेतसः संसृतिक्षयः ।
स एव चित्तसंत्याग इत्युक्तं दीर्घदर्शिभिः ॥६४॥

( शिखिध्वज उवाच )

चित्तत्यागादहं मन्ये चित्तनाशः सुसिद्धये ।
अभावः शतशो व्याधेः कथमस्यानुभूयते ॥६५॥

( कुम्भ उवाच )

अहंबीजश्चित्तद्रुमः सशाखाफलपल्लवः ।
उन्मूलय समूलं तमाकाशहृदयो भव ॥६६॥
असंसक्तमना मौनी शान्तवादविचारणः ।
संप्राप्तकारी यः सोऽन्तर्लूनश्चित्तलतो भवेत् ॥६७॥

( शिखिध्वज उवाच )

अहंभावात्मनश्चित्तद्रुमबीजस्य हे मुने ।
कोऽनलो दहनाख्येऽस्मिन् कर्मण्यर्थकरो भवेत् ॥६८॥
चित्तद्रुमस्ययद् बीजमहंभावश्च मे मलम् ।
तच्च त्यक्तुं न जानामि त्यक्तं त्यक्तमुपैति माम् ॥६९॥

( कुम्भ उवाच )

राजन् स्वात्मविचारोऽयं कोऽहं स्यामिति रूपधृक् ।
चित्तदुर्द्रुमबीजस्य दहने दहनः स्मृतः ॥७०॥

चेतो हि वासनामात्रं वास्ये तु सति वासना ।
वास्यं जगत्तदेवासदतश्चित्तास्तिता कुतः ॥७१॥
अहं त्वं जगदित्येषा प्रतिपत्तिर्नवास्ति वा ।
मिथ्या स्वप्न इवाभाति नूनं मेऽशेषकारिणी ॥७२॥
अहमित्येव संकल्पो बन्धायातिविनाशिने ।
नाहमित्येव संकल्पो मोक्षाय विमलात्मने ॥७३॥
अनहं वेदनं सिद्धिरहंवेदनमापदः ।
सोहमेवानहमिति शुद्धबोधो भवात्मवान् ॥७४॥
अहंभावानुदयतः संसारः कस्य कीदृशः ।
संसाराभावतः सर्वं परमेवावशिष्यते ॥७५॥
यदिदं भासते तत्सत्परमेवात्मनि स्थितम् ।
परं परे परापूर्णं सममेव विजृम्भते ॥७६॥
हस्तावुत्क्षिप्य यो ब्रूते शूद्रोस्मीति भृशं गिरा ।
कथं स विप्रो भवति विप्रत्वं तस्य कीदृशम् ॥७७॥
विवृत्तधातुरत्युच्चै मृतोऽस्मीति विरौति यः ।
मृतिमेवागतं विद्धि जीवनं तस्य संभ्रमः ॥७८॥
भ्रमाकृति यदस्तीह दृश्यतेऽलातचक्रवत् ।
मृगतृष्णा द्विचन्द्रादि बालवेतालकादिवत् ॥७९॥
आत्मतत्त्वैकघनया ततया ब्रह्मसत्तया ।
जगत्सर्वमिति व्याप्तं समुद्र इव वारिणा ॥८०॥

न जायते न म्रियते किंचिदस्मिञ्जगत्त्रये ।
केवलोऽयं चिदुल्लासः सदसद्भावनात्मना ॥८१॥
सर्वमात्मा परंब्रह्म सकृत् प्रकटमाततम् ।
द्वित्वैकत्वे न विद्येते न भ्रान्तिर्न च संभ्रमः ॥८२॥
न ते विनश्यति सखे न च किंचिद् विवर्धते ।
निर्मलाकाशरूपस्य कैवल्यानन्तरूपिणः ॥८३॥
इच्छानिच्छात्मिके शक्ती येतरापि त्वमेव च ।
न ह्यंशुव्यतिरेकेण शशाङ्क उपलभ्यते ॥८४॥

अजमजरमनाद्यज-स्वभावम्
सकृदमलं विलसत्सदैकरूपम् ।
विगलित-कलनं कलाख्यलीलम्
सदुदितमाद्यमजं तदात्म-तत्त्वम् ॥८५॥

( इति शिखिध्वज-परमावबोधनं नाम षष्ठः सर्गः )

## VII

### ( श्री वसिष्ठ उवाच )

इति कुम्भवचो राजा भावयंस्तदकृत्रिमम् ।
स्वयमात्मपदे तस्मिन् क्षणं परिणतोऽभवत् ॥१॥
ततो मुहूर्तमात्रेण प्रबुद्धं स्फुरितेक्षणम् ।
तमुवाच महाबाहो चूडाला कुम्भरूपिणी ॥२॥

( कुम्भ उवाच )

कच्चिदस्मिन्पदे स्फारे शुद्धे विततनिर्मले ।
सुतल्पे निर्विकल्पानां सुखं विश्रान्तवानसि ॥३॥
कच्चिदन्तःप्रबुद्धोऽसि कच्चिद्भ्रान्ति स्त्वयोज्झिता ।
कच्चिज्ज्ञेयं परिज्ञातं दृष्टं द्रष्टव्यमेव वा ॥४॥

( शिखिध्वज उवाच )

भगवंस्त्वत्प्रसादेन महाविभवभूमिका ।
महती पदवी दृष्टा सर्वस्योर्ध्वं स्थिता मया ॥५॥
सतां विदितवेद्यानामहो बत महात्मनाम् ।
अपूर्वैकामृतमयः सङ्गः सारफलप्रदः ॥६॥
जन्मनापि मया लब्धं यन्नाम न महामृतम् ।
तदद्य त्वत्समासङ्गात्तेनैवासादितं स्वयम् ॥७॥
अनन्तमाद्यममृतं चैतत्कमललोचन ।
कथं नासादितमभूत् पूर्वमात्मपदं मया ॥८॥

( कुम्भ उवाच )

मनस्युपशमं याते त्यक्तभोगैषणे स्थिते ।
कषायपाके निवृत्ते सर्वेन्द्रियगणस्य च ॥९॥
यान्ति चेतसि विश्रान्तिं विमला देशिकोक्तयः ।
यथा सितांशुके शुद्धे बिन्दवः कुङ्कुमाम्भसः ॥१०॥

कषायपाके संपन्ने त्वं मयाद्य विबोधितः ।
तेनाद्यैव तवाज्ञानक्षयो जातो महामते ॥११
हृदि यावन्मनःसत्ता तावदज्ञानसंस्थितिः ।
चित्ते चित्ततया त्यक्ते ज्ञानस्याभुदयो भवेत् ॥१२॥
प्रबुद्धोऽसि विमुक्तोऽसि त्यक्तं चित्तं त्वया नृप ।
सदसत्तामयत्वं हि त्वया त्यक्तमसत्पदम् ॥१३॥
वीतशोको निरायासो निःसङ्गोऽनन्यआत्मवान् ।
महोदयो मुनिर्मौनी स्वरूपे तिष्ठ निर्मले ॥१४॥

( शिखिध्वज उवाच )

एवं हि भगवन् जन्तो मूर्खस्यैवास्ति चित्तभूः ।
प्रबुद्धस्य न तज्ज्ञस्य चित्तं नाम किल प्रभो ॥१५॥
जीवन्मुक्तास्तदेते हि विहरन्ति कथं वद ।
अविद्यमानमनसो युष्मदाद्यास्तथा नराः ॥१६॥
इति मे कथयाशेषमन्यैः स्ववचनांशुभिः ।
हार्दं तमो मे निपुणमेवंप्रायैः प्रमार्जय ॥१७॥

( कुम्भ उवाच )

यथा वदसि तत्वज्ञ तत्तथैव हि नान्यथा ।
चित्तं हि जीवन्मुक्तानां नास्त्यङ्कुर इवाश्मनाम् ॥१८॥
यया वासनया तज्ज्ञा विहरन्तीह कर्मसु ।
तां त्वं सत्वाभिधां विद्धि पुनर्जननवर्जिताम् ॥१९॥

जीवन्मुक्ता महात्मानः सत्वस्थाः संयतेन्द्रियाः ।
विहरन्ति गतासङ्गं न चित्तस्थाः कदाचन ॥२०॥
मूढं चित्तं चित्तमाहुः प्रबुद्धं सत्वमुच्यते ।
अप्रबुद्धा हि चित्तस्थाः सत्वस्था स्तु महाधियः ॥२१॥
भूयः प्रजायते चित्तं सत्वं भूयो न जायते ।
अप्रबुद्धस्य बन्धोस्ति न प्रबुद्धस्य भूपते ॥२२॥
सत्ववानसि संजातो महात्यागी स्थितो भवान् ।
अशेषेण त्वया चित्तं त्यक्तमद्येति वेद्म्यहम् ॥२३॥
क्षयातिशयनिर्मुक्तं यत्सुखं समतामयम् ।
तत्सत् तद्वस्तु तत्किंचिन्नतु स्वर्गादिभङ्गुरम् ॥२४॥
चूडालादिसमासङ्गाद् भवेज्ज्ञत्वं सुखेन ते ।
तत्किमर्थमनर्थेऽस्मिन्निमग्न स्त्वं तपोमये ॥२५॥
सत्वं सत्वेन नाशेन नाश्यं हि विगतस्पृहः ।
पदार्थौघमिमं गृह्णंस्तिष्ठास्पन्दितचित्तभूः ॥२६॥
यानि यानीह दुःखानि प्रस्फुरन्ति जगत्त्रये ।
चेतश्चापलजान्येव तानि तानि महीपते ॥२७॥
स्थिरं शान्तं गतस्पन्दं यस्य चित्तमचापलम् ।
सदैव स महानन्दी साम्राज्यस्य स भाजनम् ॥२८॥
अथ चेतसि तत्वज्ञ स्पन्दास्पन्दौ त्वमेकताम् ।
नीत्वा तिष्ठ यथाकाममैक्यमागत्य शाश्वतम् ॥२९॥

एकं वस्तु जगत्सर्वं चिन्मात्रं वारिवाम्बुधिः ।
तदेव स्पन्दते धीभिः शुद्धवारिव वीचिभिः ॥३०॥
ब्रह्मचिन्मात्रममलं सत्यमित्यादिनामकम्
यद् गीतं तदिदं मूढाः पश्यन्त्यङ्ग जगत्तया ॥३१॥
एतच्छ्रुत्वा च बुद्ध्वा च मत्वा च मुनिनायक ।
यथेच्छसि तथा तिष्ठ दृष्टेस्पष्टे परे पदे ॥३२॥

## श्री वसिष्ठउवाच

स तत्र संश्रान्तभयोऽचिरेण
चिरेण विश्रान्तमतिः समात्मा ।
चिरेण संप्राप्तनिजामलात्मा
योगेन सुष्वाप ततोदितात्मा ॥३३॥

(इति शिखिध्वजसमाधानं नाम सप्तमः सर्गः)

# VIII

## श्री वसिष्ठ उवाच

निर्विकल्पसमाधानात्काष्ठकुड्योपमस्थितिः ।
एवं शिखिध्वजो राजा, चूडालामधुना शृणु ॥१॥
शिखिध्वजं तं भर्तारं कुम्भवेषेण तेन सा ।
प्रबोध्यान्तर्धिमागत्य ततार तरसा नभः ॥२॥

देवपुत्राकृतिं व्योम्नि जहौ मायाविनिर्मिताम् ।
विदग्धमुग्धमाकारं स्त्रैणं जग्राह सुन्दरम् ॥३॥
नभसा स्वपुरं प्राप विवेशान्तःपुरं क्षणात् ।
दृश्या बभूव लोकस्य नृपकर्म चकार च ॥४॥
वासरत्रितयेनाथ पुनरम्बरमेत्य सा ।
बभूव कुम्भो योगेन शिखिध्वजवनं ययौ ॥५॥
अहो बत वयं धन्याः पुनः प्राप्तो मुनिः स्थितः ।
इत्येवोदाहरन् राजा कुम्भाय कुसुमं ददौ ॥६॥

( कुम्भ उवाच )

यतःप्रभृति यातोऽस्मि त्वत्सकाशादनिन्दित ।
ततःप्रभृति चेतो मे त्वयैवेह समं स्थितम् ॥७॥
रम्ये स्वर्गे न तिष्ठामि समीपे तव सांप्रतम् ।
अभीष्टमुद्यदेवाङ्ग रम्याणां तत्पुरः स्थितम् ॥८॥
त्वादृशो बन्धुराप्तश्च सुहृन्मित्रं तथा सखा ।
विश्वास्यो वापि शिष्यश्च मन्ये जगति नास्ति मे ॥९॥

( शिखिध्वज उवाच )

अहो नु फलितं पुण्यपादपैर्नः कुलाचले ।
यस्माद् भवानसङ्गोपि वाञ्छत्यस्मत्समागमम् ॥१०॥
इदं वनमिमे वृक्षा भृत्योऽयमहमादृतः ।
रोचते ते न चेत् स्वर्गस्तदिह स्थीयतां प्रभो ॥११॥

## ( श्री वसिष्ठ उवाच )

अथ कुम्भ उवाचान्यद्वनं यावो गिराविति ।
तदोमिति नृपो मत्वा तावुभौ प्रविचेरतुः ॥१२॥
वनान्यनेकरूपाणि जङ्गलानि तटानि च ।
सरांसि गुल्मजालानि शृङ्गाणि गहनानि च ॥१३॥
नदीर्देशांस्तथा ग्रामान्नगराणि वनानि च ।
मञ्जुघोषान् गिरीन्कुञ्जांस्तीर्थान्यायतनानि च ॥१४॥
सममेव समस्नेहौ समवेतौ स्थितावुभौ ।
समसत्वौ समोत्साहौ शंसन्तौ तस्थतुः सदा ॥१५॥
तमालवनखण्डेषु मन्दारगहनेषु च ।
दंपती स्निग्धहृदयौ सुहृदौ तौ विरेजतुः ॥१६॥
अथ तं सुरगर्भाभं चूडाला सा शिखिध्वजम् ।
दृष्ट्वा शोभामुपगतं चिन्तयामास मानिनी ॥१७॥
अयं पतिरदीनात्मा रम्याश्च वनभूमयः ।
इयं स्थितिरनायासा या न कामेन वञ्चिता ॥१८॥
जीवन्मुक्तधियां भोगं यथा प्राप्तमतिष्ठताम् ।
एकाग्रहात्मिका तुच्छा मूढतैवोदिता भवेत् ॥१९॥
निजः पतिरुदारात्मा निराधिश्च नवं वयः ।
गृहाणि पुष्पजालानि सा हता या न कामिनी ॥२०॥

वनपुष्पलतागेहे स्वायत्ते भर्तरि प्रिया ।
रमते या न निर्दुःखा सा हतैव दुरङ्गना ॥२१॥
रम्यं विवाहितं कान्तं पतिमासाद्य निर्जने ।
स्त्रीं सती या न रमते तां धिगस्तु दुरङ्गनाम् ॥२२॥
समुज्झता यथाप्राप्तमपि वेद्यविदा सदा ।
अनिन्द्यं समुदारार्थं किं तज्ज्ञेन कृतं भवेत् ॥२३॥
तत्किंचिद्रचयाम्याशु प्रपञ्चं प्रेक्षया वने ।
येनायं भूपतिर्भर्ता रमते मयि मानदः ॥२४॥
इति संचिन्त्य चूडाला कुम्भवेषधरा पतिम् ।
प्राह काननगुल्मस्था कोकिलं कोकिला यथा ॥२५॥

( कुम्भ उवाच )

चैत्रमासस्य शुक्लोऽयं प्रतिपद्दिवसो महान् ।
अद्यास्थानं महारम्भं स्वर्गे भवति वै हरेः ॥२६॥
संनिधानं मया तत्र कर्तव्यं पितुरग्रतः ।
यथास्थिता हि नियतिर्न संत्याज्या कदाचन ॥२७॥
आगच्छामि दिनान्तेऽद्य निर्विकल्पं नभस्तलात् ।
स्वर्गादतितरामेव त्वत्सङ्गो मम तुष्टये ॥२८॥

श्री वसिष्ठ उवाच

इत्युक्त्वा मञ्जरीं कुम्भो ददौ मित्राय कौसुमीम् ।
प्रीतये स्वामित्र प्रीतिं कान्तां नन्दनवृक्षजाम् ॥२९॥

शिखिध्वजो व्रजन्तं तं ददर्शादर्शनं तदा ।
उन्निद्रोऽब्दं यथा बर्हीं धीमत्प्रीतिर्हि दुस्त्यजा ॥३०॥
शिखिध्वज दृशामन्ते व्योम्नि कुम्भवपुर्जहौ ।
शान्तावर्तेव वारिश्रीमुग्धा स्वं रूपमाययौ ॥३१॥
प्राप मञ्जिरिताकारकल्पवृक्षोपमं पुरम् ।
स्फुरत्पताकमात्मीयं स्वर्गरम्यं दिवः पथा ॥३२॥
अन्तःपुरमदृश्यैव विवेश ललनाकुलम् ।
मधुमासमहालक्ष्मीर्लसल्लतमिव द्रुमम् ॥३३॥
राजकार्याणि सर्वाणि यत्र संपाद्य सत्वरम् ।
शिखिध्वजस्य पुरतः पपात फलपुष्पवत् ॥३४॥
तत्र म्लानद्युतिमुखं चकाराखिन्नमानसा ।
इन्दुं सनीहारमिव श्यामा खिन्नमिवाम्बुजम् ॥३५॥
तं दृष्ट्वा तादृशाकारं समुत्तस्थौ शिखिध्वजः ।
बभूव खिन्नचेताश्च समुवाचेदमादृतः ॥३६॥
देवपुत्र नमस्तेऽस्तु विमना इव लक्ष्यसे ।
कुम्भस्त्वं त्यज संरम्भमिदमासनमास्यताम् ॥३७॥

( कुम्भ उवाच )

शृणु कार्यमिदं चित्तं मदीयं वसुधाधिप ।
कथयामि तवाशेषं स्वर्गे यद्वृत्तमद्य मे ॥३८॥

अहं तावदितो यातो भवते पुष्पमञ्जरीम् ।
दत्वा गगनमुल्लङ्घ्य संप्राप्तश्च त्रिविष्टपम् ॥३९॥
ततः पित्रा महेन्द्रस्य सभास्थाने यथाक्रमम् ।
स्थित्वोत्थाय तथोत्थानकाले पित्रा विसर्जितः ॥४०॥
इहागन्तुमहं त्यक्त्वा स्वर्गं संप्राप्तवान्नभः ।
दिवाकरहयैः सार्धं वहाम्यनिलवर्त्मनि ॥४१॥
अथाभ्रे वारिपूर्णानां मेघानां मध्यवर्त्मनः ।
अपश्यं मुनिमायान्तमहं दुर्वाससं जवात् ॥४२॥
पयोधरपटच्छन्नं विद्युद्वलयभूषितम् ।
अभिसारिकया तुल्यं धाराधौताङ्गचन्दनम् ॥४३॥
तस्य कृत्वा नमस्कारमुक्तं खे वहता मया ।
मुने नीलाभ्रवस्त्रस्त्वमभिसारिकया समः ॥४४॥
इत्याकर्ण्य मुमोचासौ मयि मानद शापकम् ।
गच्छानेन दुरुक्तेन रात्रौ योषा भविष्यसि ॥४५॥

## ( श्री वसिष्ठ उवाच )

अथार्कोऽप्यस्य कुम्भस्य स्त्रीत्वमुपपादयन्निव ।
जगामास्तं जगद्दीपो दीपः स्नेहक्षयादिव ॥४६॥
ततः कुम्भः शनैस्तत्र स्त्रैणमभ्याहरन् वपुः ।
शिखिध्वजं पुरःसंस्थं प्रोवाच गलदक्षरम् ॥४७॥

पश्येमे परिवर्धन्ते राजन्मम शिरोरुहाः ।
प्रस्फुरत्तारका माला दिनान्ततिमिरा इव ॥४८॥
पश्येमौ मम जायेते प्रोन्मुखावुरसि स्तनौ ।
कोरकाविव पद्मिन्या वसन्ते गगनोन्मुखौ ।
आगुल्फमेव लम्बानि संपद्यन्तेऽम्बराणि मे ॥ ४९॥
पश्यायं स्वयमेवाद्य चन्द्रांशुकरशोभनः ।
मूर्ध्नि पट्टांशुको जातो नीहारोऽद्राविवाङ्ग मे ॥५०॥

## ( श्री वसिष्ठ उवाच )

इति सा राजमहिषी चूडाला वरवर्णिनी ।
विजहार वनान्तेषु कुमारी धर्मिणी निशि ।
कुम्भरूपधराचाह्नि भर्त्रा मित्रेण संयुता ॥५१॥

( इति कुम्भस्य स्त्रीत्वलाभो नाम अष्टमः सर्गः )

# IX

## ( श्री वसिष्ठ उवाच )

ततः कतिपयेष्वेव दिवसेषु गतेषु सा ।
इदं प्रोवाच भर्तारं कुम्भरूपधरा सती ॥१॥
राजन् राजीवपत्राक्ष ममेदं वचनं शृणु ।
निशायां प्रत्यहं तावत्स्थित एवाहमङ्गना ॥२॥
तदिच्छाम्यङ्गनाधर्मं निपुणीकर्तुमीदृशम् ।
भर्त्रे कस्मैचिदात्मानं विवाहेन ददाम्यहम् ॥३॥

तद्भवानेव मे भर्ता रोचते भुवनत्रये ।
गृहाण मां विवाहेन भार्यात्वे निशि सर्वदा ॥४॥
इच्छानिच्छे फलेत्यक्त्वा समन्तात् सर्ववस्तुषु ।
वयं न सेच्छा नानिच्छाः कुर्मस्तेनेदमीप्सितम् ॥५॥

( शिखिध्वज उवाच )

कृतेनानेन कार्येण न शुभं नाशुभं सखे ।
पश्यामि तन्महाबुद्धे यथेच्छसि तथा कुरु ॥६॥
समतां संप्रभातेन चेतसेदं जगत् त्रयम् ।
स्वरूपमेव पश्यामि यथेच्छसि तदाचर ॥७॥

( कुम्भ उवाच )

यद्येवं तन्महीपाल लग्नमद्यैव शोभनम् ।
राकेयं श्रावणस्यास्य ह्यः सर्वं गणितं मया ॥८॥
रात्रावद्योदिते चन्द्रे परिपूर्णकलामले ।
जन्यत्रो नौ महाबाहो द्वयोरेव भविष्यति ॥९॥
महेन्द्राद्रिशिरःशृङ्गसानावद्य मनोरमे ।
रत्नदीपप्रकाशाढ्ये मणिकन्दरमन्दिरे ॥१०॥
पुष्पभारानतोत्तुङ्गवृक्षराजिविराजिते ।
वनपुष्पलतालास्यनारीनृत्यमनोहरे ॥११॥
निशि व्योमगतास्तारा भर्त्रा पूर्णेन्दुना सह ।
आवयोः परिपश्यन्तु कर्णान्तायतलोचन ॥१२॥

उत्तिष्ठात्मविवाहार्थं कुर्वः काननकोटरात् ।
राजंश्चन्दनपुष्पादिसंभारं रत्नसंयुतम् ॥१३॥
इत्युक्त्वा कुम्भ उत्थाय सह तेन महीभृता ।
कुसुमावचयं चक्रे तथा रत्नादिसंचयम् ॥१४॥
तथा जन्यत्रसंभारं कृत्वा काञ्चनकन्दरे ।
ययतुस्ते महामित्रे स्नातुं मन्दाकिनीं नदीम् ॥१५॥
तत्रैनं स्नापयामास महाराजं महादरात् ।
गजकुम्भोपमस्कन्धं कुम्भो मङ्गलपूर्वकम् ॥१६॥
भविष्यद्दयितारूपां भविष्यद्दयितोऽङ्गनाम् ।
चूड़ालां स्नापयामास कुम्भरूपधरां प्रियाम् ॥१७॥
कल्पवृक्ष-दुकूलानि परिधाय सितानि तौ ।
फलानि भुक्त्वा जन्यत्रस्थानमाययतुः क्रमात् ॥१८॥
एतावताथ कालेन तयोर्जन्यत्र-सोत्कयोः ।
प्रियं कर्तुमिवास्ताद्रिं द्रागित्येवाविशद्रविः ॥१९॥
अथ संध्याक्रमे वृत्ते कृते जप्याघमर्षणे ।
विवाहदर्शनायैव ताराजाले खमागते ॥२०॥
मिथुनैकसखी यामा कुमुदोत्करहासिनी ।
प्रालेयजालप्रकरं विकिरन्ती समाययौ ॥२१॥
भूषयामास राजानं स्त्रीत्वं गच्छन्निशागमे ।
चन्दनागुरुकर्पूरैर्मृगजकुङ्कुमैः ॥२२॥

तथा कल्पलतागुच्छैर्मन्दारैः पारिजातकैः ।
संतानैर्बहुरत्नैश्च मौलिना चेन्दुरूपिणा ॥२३॥
एतावताथ कालेन वधूत्वं कुम्भ आययौ ।
घनस्तनभराक्रान्तो बभूवाशु विलासवान् ॥२४॥
इदं संचिन्तयामास संपन्नोऽयमहं वधूः ।
कामायात्मा मया देयः कार्यं कालोचितं किल ॥२५॥
इयमस्मि वधूः कान्ता भर्ता त्वं मे पुरः स्थितः ।
गृहाण कामं मामेहि कालोऽयं तव हृच्छय ॥२६॥
इति संचिन्त्य भर्तारमग्रस्थगहनस्थितम् ।
उदयन्तभिवादित्यं रतिः काममिवाभ्यगात् ॥२७॥
अहं मदनिका नाम भार्यास्मि तव मानद ।
पादयास्ते प्रणामोऽयं सस्नेहं क्रियते मया ॥२८॥
इत्युक्त्वा सानवद्याङ्गी लज्जावनमितानना ।
लोलालकेन शिरसा प्रणनाम लसत्पतिम् ॥२९॥
उवाचेदं च हे नाथ त्वं मां भूषय भूषणैः ।
क्रमेणाग्निं च संज्वाल्य मत्पाणिग्रहणं कुरु ॥३०॥
इन्दोरिवांशुजालानि राजन्माल्यानि तानि ते ।
मेरुगङ्गा प्रवाहाभां धत्तो हारस्तवोरसि ॥३१॥
मन्दारकुसुमप्रोतैः कुन्तलैर्नृप राजसे ।
कनकाज्ञमिवोल्लोलैर्भृङ्गैः खचितकेसरैः ॥३२॥

रत्नांशुजालैः कुसुमैः श्रिया स्थैर्येण तेजसा ।
रत्नस्थानं विभो मेरुमभिभूयावतिष्ठसे ॥३३॥
एवमादि वदन्तौ तौ भविष्यन्नवदम्पती ।
प्रच्छन्नपूर्वदांपत्यौ मिथस्तुष्टौ बभूवतुः ॥३४॥
महाराज्ञीं मदनिकां महाराजः शिखिध्वजः ।
काञ्चनोपलपर्यङ्के निविष्टोऽभूषयत्स्वयम् ॥३५॥
अवतंसैस्तथा माल्यै मणिरत्नविभूषणैः ।
वस्त्रैर्विलेपनैः पुष्पै रुचिरस्थानकापि तैः ॥३६॥
सा बभौ भूषिता तन्वी मदनी मददायिनी ।
गिरिजेव विवाहोत्का कामकान्तेव कामिनी ॥३७॥
महाराजो महाराज्ञीं भूषयित्वेदमाह ताम् ।
राजसे मृगशावाक्षि लक्ष्मीरिव नवोदिता ॥३८॥
शक्रेण सह यच्छच्या यल्लक्ष्म्या हरिणा सह ।
यद्गौर्याः शंभुना सार्धं तत्ते भवतु मङ्गलम् ॥३९॥
पद्मकोशाङ्करहृदा लोलनीलोत्पलेक्षणा ।
आमोदशुभझांकारा स्वास्थिता पद्मिनीव सा ॥४०॥
सुरक्तपल्लवकरा स्तनस्तवकधारिणी ।
त्वमनेकफला मन्ये कामकल्पतरोर्लता ॥४१॥
हिमशीतावदाताङ्गी ज्योत्स्ना प्रसरहासिनी ।
पूर्णेन्दुश्रीरिवोद्यक्ता हृष्टैवाह्लादयस्यलम् ।
तदुत्तिष्ठ वरारोहे वेदीं वैवाहिकीं स्वयम् ॥४२॥

ज्वालयामासतुस्तस्या मध्ये चन्दनदारुभिः ।
ज्वलनं ज्वालितज्वालं दक्षिणस्थं प्रदक्षिणम् ॥४३॥
पूर्वाभिमुखमेवाग्नेरग्रे पल्लवविष्टरे ।
नियोज्य दंपती कान्तौ तयोर्विविशतुः स्वयम् ॥४४॥
अन्योन्यं शोभमानौ तौ भवाविव वने शिवौ ।
चक्रतुर्दंपती तस्य पावकस्य प्रदक्षिणम् ॥४५॥
स्वदायं ज्ञानसर्वस्वं हृदयं प्रेमचापलम् ।
ददतुस्तौ मिथोऽन्योन्यस्मितकान्तमुखश्रियौ ॥४६॥
प्रदक्षिणत्रयं कृत्वा लाजांस्त्यक्त्वाथ वह्नये ।
भार्यावरौ समं तुष्टौ करौ तत्यजतुः क्रमात् ॥४८॥

तैस्तैर्मिथः प्रणयपेशलवाग्विलासै-
स्तत्कालकार्यसुभगैः प्रणयोपचारैः ।
सत्कान्तयोर्नवनवेन तयोः सुखेन
दीर्घा मुहूर्त इव सा रजनी जगाम ॥

( इति लीलाविवाहो नाम नवमः सर्गः )

## X

## ( श्री वसिष्ठ उवाच )

अथ सूर्याख्यरङ्गेण रञ्जिते भुवनोदरे ।
शिखिध्वजाङ्गना प्रातर्मदनी कुम्भतां ययौ ॥१॥

एवं महेन्द्रदर्यां तावुभौ कुम्भशिखिध्वजौ ।
स्वयं विवाहिताविष्टौ संपन्नौ देवदंपती ॥२॥
विलेसतु विचित्रासु प्रत्यहं वनराजिषु ।
प्रपक्वफलभारासु पुष्पपल्लविनीषु च ॥३॥
दिवा प्रीततरौ मित्रे यामिन्यामिष्टदंपती ।
प्रभादीपाविव श्लिष्टौ न वियुक्तौ बभूवतुः ॥४॥
दिनैस्त्रिभि स्त्रिभिर्गत्वा निद्रां गतवति प्रिये ।
चूडाला राजकार्याणि कृत्वा स्वभ्याययौ पुनः ॥५॥
ततो यातेषु मासेषु शनैः कतिपयेषु सा ।
चूडाला चिन्तयामास देवपुत्रकरूपिणी ॥६॥
सुरूपभोगभारेण परीक्षेऽहं शिखिध्वजम् ।
मा कदाचन चेतोऽस्य भोगेषु रतिमेष्यति ॥७॥
इति संचिन्त्य चूडाला मायया विपिनावनौ ।
आगतं दर्शयामास ससुराप्सरसं हरिम् ॥८॥
इन्द्रमभ्यागतं दृष्ट्वा परिवारसमन्वितम् ।
यथावत्पूजयामास वनसंस्थः शिखिध्वजः ॥९॥

( शिखिध्वज उवाच )

आत्मना किं कृता दूरादभ्यागमकदर्थना ।
देवराज यथा तन्मे प्रसादाद्वक्तुमर्हसि ॥१०॥

( इन्द्र उवाच )

इमे वयमिहायातास्त्वद्गुणातिशयेन स्वात् ।
हृदि लग्नेन सूत्रेण खगा वनगता इव ॥११॥
उत्तिष्ठ स्वर्गमागच्छ तत्र सर्वे त्वदुन्मुखाः ।
त्वद्गुणश्रवणाश्चर्याः स्थिता देवाङ्गनागणाः ॥१२॥
आगत्य विविधा भोगास्त्वया विबुधसद्मनि ।
जीवन्मुक्तेन भोक्तव्या स्तेन त्वामहमागतः ॥१३॥
अविघ्नमागतेनाद्य सुखं विहरता त्वया ।
स्वर्गः पवित्रतां यातु हरिणेव जगत्त्रयम् ॥१ ॥

( शिखिध्वज उवाच )

सर्वं स्वर्गसमाचारं वेद्मि देवाधिनायक ।
किन्तु सर्वत्र मे स्वर्गो नियतो न तु कुत्रचित् ॥१५॥
सर्वत्रैव हि तुष्यामि सर्वत्रैव रमे प्रभो ।
अवाञ्छनत्वान्मनसः सर्वत्रानन्दवानहम् ॥१६॥
नियतं किंचिदेकत्र स्थितं स्वर्गकमीदृशम् ।
शक्र गन्तुं न जानामि त्वदाज्ञां न करोम्यहम् ॥१७॥

( शक्र उवाच )

साधो विदितवेद्यानां परिपूर्णधियां समम ।
सज्जनाचरितं युक्तं मन्ये भोगोपसेवनम् ॥१८॥

## ( श्री वसिष्ठ उवाच )

देवेशे प्रोक्तवत्येवं तूष्णीमेव स्थिते नृपे ।
किमितो नापयास्येवं त्वमिति प्रोक्तवान् हरिः ॥१९॥
नाहमद्यैव कालेन वदतीति शिखिध्वजे ।
कल्याणं तेऽस्तु कुम्भेति वदन्नन्तर्धिमाययौ ॥२०॥

( इति शक्रागमनं नाम दशमः सर्गः )

## XI

## ( श्री वसिष्ठ उवाच )

तां मायां शममानीय चूडाला समचिन्तयत् ।
दिष्ट्या भोगेच्छया नायं ह्रियते वसुधाधिपः ॥१॥
शान्तः समसमाभोग एवं शक्रसमागमे ।
असंरम्भमहेलं च कृतवान् व्यावहारिकम् ॥२॥
भूय एव प्रपञ्चेन विमृशाम्येव सादरम् ।
रागद्वेषप्रधानेन केनचिद् बुद्धिहारिणा ॥३॥
इति संचिन्त्य सा रात्राविन्दावभ्युदिते वने ।
गृहीतमङ्गनारूपं कान्तामदनिका सती ॥४॥
वाते वहति फुल्लाढ्ये मधुरामोदमांसले ।
संध्याजप्यपरे नद्यास्तीरसंस्थे शिखिध्वजे ॥५॥
संतानकलतागेहं नीरन्ध्रैः पुष्पगुच्छकैः ।
शुद्धान्तं वनदेवीनां प्रविवेश मदान्विता ॥६॥

तत्र संकल्पिते पुष्पशयने माल्यमालिता ।
कण्ठे संकल्पितं कान्तं खिङ्गमादाय संस्थिता ॥७॥
आगत्यान्विष्य कुञ्जात्स प्रददर्श शिखिध्वजः ।
लतागेहे मदनिकां कण्ठे खिङ्गमनोहरम् ॥८॥

( मदनिकोवाच )

अबला स्त्री तथा बाला मूढाहमपराधिनी ।
क्षन्तुमर्हसि नाथ त्वं क्षमावन्तो हि साधवः ॥९॥

( शिखिध्वज उवाच )

मन्युर्मम न बालेऽन्त विद्यते ख इव द्रुमः ।
केवलं साधुनिन्द्यत्वान्नेच्छामि त्वामहं वधूम् ॥१०॥
सुहृत्वेन वनान्तेषु पूर्ववत् सुखमङ्गने ।
वीतरागतया नित्यं सममेव रमावहे ॥११॥

( श्रीवसिष्ठ उवाच )

एवं समतया तत्र स्थिते तस्मिञ्छिखिध्वजे ।
चूडाला चिन्तयामास तत्सत्वेनोदिताशया ॥१२॥
अहो बत परं साम्यं भगवानयमागतः ।
वीतरागतयाऽक्रोधो जीवन्मुक्तोऽवतिष्ठते ॥१३॥
नैनं हरन्ति ते भोगा न महत्योपि सिद्धयः ।
न सुखानि न दुःखानि नापदो न च संपदः ॥१४॥

चिन्तिताः सकला एकं प्रयान्त्येनमनिन्दिताः ।
मन्ये महर्द्धयः कान्ता नारायणमिवापरम् ॥१५॥
आत्मवृत्तान्तमखिलं तमेनं स्मारयाम्यहम् ।
कुम्भरूपमिदं त्यक्त्वा चूडालैव भवाम्यहम् ॥१६॥
इति संचिन्त्य चूडाला चूडालावपुरक्षता ।
दर्शयामास तत्राशु त्यक्त्वा मदनिकावपुः ॥१७॥
तस्मान्मदनिकादेहाच्चूडाला निर्गतेव सा ।
बभावस्य पुरो युक्ता निर्गतेव समुद्गकात् ॥१८॥
तां ददर्शानवद्याङ्गीं पुनः प्रणयपेशलाम् ।
कान्तां मदनिकामेव चूडालां दयितां स्थिताम् ॥१९॥

समुदितामिव माधवपद्मिनीम्
उपगतामिव भूमितलाच्छ्रियम् ।
प्रकटितामिव रत्न-समुद्गकात्
परिददर्श निजां दयितां नृपः ॥२०॥

( इति चूडाला-स्वरूपदर्शनं नाम एकादशः सर्गः )

## XII

## ( श्री वसिष्ठ उवाच )

अथ तां दयितां दृष्ट्वा विस्मयोत्फुल्ललोचनः ।
शिखिध्वज उवाचेदमाश्चर्याकुलया गिरा ॥१॥

का त्वमुत्पलपत्राक्षि कुतः प्राप्तासि सुन्दरि ।
किमिहासि कियत्कालं किमर्थमिह तिष्ठसि ॥२॥
अङ्गेन व्यवहारेण स्मितेनानुनयेन च ।
मम जाया विलासेन तत्कलेवोपलक्ष्यसे ॥३॥

( चूडालोवाच )

एवमेव प्रभो विद्धि चूडालास्मि न संशयः ।
अकृत्रिमेण देहेन लब्धोऽस्यद्य मया स्वयम् ॥४॥
कुम्भादिदेह-निर्माणै स्त्वां बोधयितुमेव मे ।
प्रपञ्चः शतशास्त्वमिह यातो वनान्तरे ॥५॥
यदा राज्यं परित्यज्य मोहेन तपसे वनम् ।
त्वमगास्तत्प्रभृत्येव त्वद्बोधायाहमुद्यता ॥६॥
अथ चूडालये त्युक्तो बद्ध्वा परिकरं नृपः ।
सर्वमालोक्य भूपालो विरराम समाधितः ॥७॥
समाधिविरतो हर्षविकासिनयनाम्बुजः ।
विसार्य तरसा बाहू पुलकोज्ज्वलतां गतौ ॥८॥
गलदङ्गं घनस्नेहं मुञ्चद्बाष्पं स्फुरत्स्पृहम् ।
आलिलिङ्ग चिरं कान्तां नकुलो नकुलीमिव ॥९॥
तयोरालिङ्गने तस्मिंस्तत्र भावो बभूव यः ।
न स वासकिजिह्वाभिर्वक्तुं हर्षेण शक्यते ॥१०॥

द्विविस्थाविव पङ्केन कृताविव मिलत्तनू।
शैलाविव समुत्कीर्णौ श्लिष्टावास्तां चिरं प्रियौ ॥११॥
मुहूर्तेन गलद्घर्मजलौ पुलकपीवरौ।
बाहू विश्लथतामीषन्निन्यतुस्तौ शनैः प्रियौ।
अमृतापूर्णहृदयौ संशून्यहृदयोपमौ ॥१२॥
उन्मुक्त-भुजमास्तां तावलक्ष-स्थितलोचनम्।
घनानन्दं क्षणं स्थित्वा तूष्णीं प्रणयपेशलम्।
कान्तां चिबुक-संलग्नकरः प्रोवाच भूपतिः ॥१३॥
अत्यन्तमधुरः स्निग्धः कान्तः स्वकुलयोषिताम्।
पुण्यश्चरति निष्यन्दः स्वादुर्नामामृतादपि ॥१४॥
कियत्प्रमाणस्तन्वङ्ग्या त्वया बालेन्दुमुग्धया।
अनुभूतश्चिरं क्लेशो भर्तुरर्थेन दारुणः ॥१५॥
एवं दुरुत्तरात् तस्मात् संसारकुहरादहम्।
उत्तारितो यया बुद्ध्या स हि केनोपमीयते ॥१६॥
अरुन्धती शची गौरी गायत्री श्रीः सरस्वती।
समस्ताः पेलवायन्ते तव तन्व्या गुणश्रिया ॥१७॥
धीः श्रीः कान्तिः क्षमा मैत्री करुणाद्यासु सुन्दरि।
कान्तास्वाकारकान्तासु प्रथमेवाभिलक्ष्यसे ॥१८॥
परेणाध्यवसायेन त्वयाहमवबोधितः।
केन प्रत्युपकारेण परितुष्यति ते मनः ॥१९॥

मोहादनादिगहनादनन्तगहनादपि ।
पतितं व्यसनायिन्यस्तारयन्ति कुलस्त्रियः ॥२०॥
शास्त्रार्थगुरु-मन्त्रादि तथा नोत्तारणक्षमम् ।
यथैताः स्नेह-शालिन्यो भर्तृणां कुलयोषितः ॥२१॥
सखा भ्राता सुहृद् भृत्यो गुरुर्मित्रं धनं सुखम् ।
शास्त्रमायतनं दासः सर्वं भर्तुः कुलाङ्गनाः ॥२२॥
सर्वदा सर्वयत्नेन पूजनीयाः कुलाङ्गनाः ।
लोक-द्वयसुखं सम्यक् सर्वं यासु प्रतिष्ठितम् ॥२३॥
निरिच्छायाः प्रयातायाः पारं संसार-वारिधेः ।
कथमस्योपकारस्य करिष्ये ते प्रतिक्रियाः ॥२४॥
मन्ये कुलाङ्गनानां लोके सर्वास्त्वया जिताः ।
नारी-सौजन्य-चर्चासु व्यपदेश्या भविष्यसि ॥२५॥
सती त्वं रूपसौजन्य-गुणरत्न-समुद्गिके ।
एहि मे त्वद्गुणोत्कस्य पुनरालिङ्गनं कुरु ॥२६॥

( श्री वसिष्ठ उवाच )

इत्युक्त्वा मृगशावाक्षीं चूडालां तां शिखिध्वजः ।
आलिलिङ्ग पुनर्गाढं नकुलो नकुलीमिव ॥२७॥

( चूडालोवाच )

देव शुष्कक्रियाजालपरे त्वय्याकुलात्मनि ।
भूयो भूयो भृशमहं त्वदर्थं दुःखिताभवम् ॥२८॥

तेन त्वदवबोधात्मा स्वार्थ एवोपपादितः ।
मया तदत्र किं देव करोषि मम गौरवम् ॥२६॥

( शिखिध्वज उवाच )

त्वया यथा वरारोहे स्वार्थः संपाद्यते शुभः ।
तमिदानीं तथा सर्वाः साधयन्तु कुलाङ्गनाः ॥३०॥
तरङ्गतरलापाङ्गे गुरुस्त्वं मे नमोऽस्तु ते ।
प्रसादेन विशालाद्यास्तीर्णोऽस्मि भवसागरात् ॥३१॥

( चूडालोवाच )

एवंस्थिते महासत्व प्राणेश हृदयप्रिय ।
किमिदानीं प्रभो ब्रूहि रोचते ते महामते ॥३२॥

( शिखिध्वज उवाच )

यदेव किंचिज्जानासि तदेव कुरु सुन्दरि ।
तदेव धारयिष्यामि प्रतिबिम्बं यथा मणिः ॥३३॥

( चूडालोवाच )

यद्येवं तन्महाबाहो समाकर्णय मन्मतम् ।
आकर्ण्य जीवन्मुक्तात्मा तदेवाहर्तुमर्हसि ॥३४॥
राज्येन सांप्रतेनेमं कालं नीत्वा क्रमेण वै ।
विदेहतां प्रयास्यामः प्रभो कालेन केनचित् ॥३५॥
स्व एव नगरे राजा भव त्वं स्वासने स्थितः ।
ललामो ननु कान्तानां महिषी ते भवाम्यहम् ॥३६॥

सनृपा मत्तवारतव्या नृत्यन्नवनवाङ्गना ।
सपताका ध्वनत्तूर्या पुष्पप्रकिरणी पुरी ॥३७॥
लसद्वल्ल्या समञ्जर्या रणत्पुष्पालिमालया ।
मधुमासलता-लक्ष्म्या चिराद् भवतु सा समा ॥३८॥

( श्री वसिष्ठ उवाच )

इति चूडालया प्रोक्तो विहस्य स शिखिध्वजः ।
प्रोवाच मधुरं वाक्यमक्षुब्धं विगतज्वरः ॥३९॥
एवं चेत्तद् विशालाक्षि स्वायत्ता नस्त्रिविष्टपे ।
सिद्धभोग-श्रियस्तासु निवसामि न किं प्रिये ॥४०॥

( चूडालोवाच )

न राजन्मम भोगेषु वाञ्छा नापि विभूतिषु ।
स्वभावस्य वशादेव यथाप्रप्तेन मे स्थितिः ॥४१॥
न सुखाय मम स्वर्गो न राज्यं नापि च क्रिया ।
यथास्थितमविक्षुब्धं तिष्ठामि स्वस्थचेष्टिता ॥४२॥
इदं सुखमिदं नेति मिथुने क्षयमागते ।
सममेव पदे शान्ते तिष्ठामीह यथासुखम् ॥४३॥

( शिखिध्वज उवाच )

युक्तमुक्तं विशालाक्षि त्वयैतत्समया धिया ।
को वार्थः किल राज्यस्य ग्रहे त्यागेऽपि वा भवेत् ॥४४॥

सुखदुःखदशाचिन्तां त्यक्त्वा विगतमत्सरम् ।
यथासंस्थानमेवेमौ तिष्ठावः स्वस्थतां गतौ ॥४५॥
इति तत्र कथालापकथनेन तयोर्द्वयोः ।
कान्तयोश्चिर-दंपत्योर्वासरस्तनुतां ययौ ॥४६॥
अथोत्थाय दिनाचारं यथाप्राप्तमनिन्दितौ ।
सोत्कराठावप्यनुत्कण्ठौ चक्रतुः कार्यकोविदौ ॥४७॥
स्वर्गसिद्धिमनादृत्य तस्थतुः पूर्णचेतसौ ।
एकस्मिन्नेव शयने तैस्तः प्रणयचेष्टितैः ।
सा व्यतीयाय रजनी तयोर्जीवन्विमुक्तयोः ॥४८॥

( इति चूडालाप्रकटीकरणं नाम द्वादशः सर्गः )

## XIII

## ( श्री वसिष्ठ उवाच )

ततः समुदिते सूर्ये वितमस्यम्बरे स्थिते ।
समुद्गकादिव जगन्मणौ तस्मिन् विनिर्गते ॥१॥
विकसत्यरुणोपान्ते चक्षुषीवाम्बुजाकरे ।
आचारेष्विव लोकेषु प्रसृतेष्वर्करश्मिषु ॥२॥
दंपती तौ समुत्थाय कृतसंध्याक्रमौ स्थितौ ।
पत्रासने मृदुस्निग्धे कान्तौ काञ्चनकन्दरे ॥३॥

अथोत्थायात्र चूड़ाला रत्नकुम्भं पुरः स्थितम् ।
कान्ता संकल्पयामास पूर्णं सप्ताब्धिवारिभिः ॥४॥
तेन मङ्गलकुम्भेन तं पूर्वाभिमुखं स्थितम् ।
भार्या भर्तारमेकान्ते स्वराज्येऽभिषिषेच सा ॥५॥
संकल्पोपगते हैमे स्वभिषिक्तं स्वविष्टरे ।
स्थितं प्रोवाच तन्वी सा चूड़ाला देवरूपिणी ॥६॥
केवलं मौनमुत्सृज्य तेजः शान्तमिदं प्रभो ।
अष्टानां लोकपालानां तेजस्त्वं भर्तुमर्हसि ॥७॥
चूड़ालयेति संप्रोक्तो वने राजा शिखिध्वजः ।
वदन्नेवं करोमीति महाराजत्वमाययौ ॥८॥
अथ प्रतीहारपदे तिष्ठन्तीमाह मानिनीम् ।
अद्य देवीपदे राज्ञीं त्वां करोम्यभिषेकिनीम् ॥९॥
इत्युक्त्वा सरसि स्नाप्य महादेवीपदे तथा ।
अभिषिक्तां नृपः कृत्वा स तामाह निजां प्रियाम् ॥१०॥
प्रिये कमलपत्राक्षि क्षणात्संकल्पसंभवम् ।
महाविभवमुद्दाम-सैन्यमाहर्तुमर्हसि ॥११॥
इति कान्तवचः श्रुत्वा चूड़ाला वरवर्णिनी ।
सैन्यं संकल्पयामास प्रावृड्घनमिवोद्भटम् ॥१२॥
सैन्यं ददृशतुस्तत्तौ वाजिवारणसंकुलम् ।
पताकापूरिताकाशं नीरन्ध्रीकृतकाननम् ॥१३॥

तूर्यारवववनच्छैल-गुहागहनकोटरम् ।
मौलिरत्नमहोद्योत-विचूर्णिततमःपटम् ॥१४॥
तत्र गन्धद्विपवरे कृतपार्थिवमण्डले ।
रचिते हृष्टसामन्तैरारूढौ नृपदंपती ॥१५॥
ततः शिखिध्वजो राजा महिष्या समभिष्टया ।
पदातिरथसंबाधं कर्षन्नतिबलो बलम् ॥१६॥
चचालाचलचालिन्या सेनया स ततो वनात् ।
भिन्दन्निव रसाशैलं घात्ययेवाशु भीमया ॥१७॥
तस्मान्महेन्द्र-शैलेन्द्राच्चलितः स महीपतिः ।
पथि पश्यन् गिरीन् देशान् नदीर्ग्रामान् सजङ्गलान् ॥१८॥
दर्शयन् स्वप्रियायास्तमात्मवृत्तान्तसंचयम् ।
प्रापाल्पेनैव कालेन स्वां पुरीं स्वर्गशोभनाम् ॥१९॥
तत्र ते तस्य सामन्ता स्तदागमनमादृताः ।
विविदुर्जयशब्देन निर्जग्मुश्चोदिताशयाः ॥२०॥
एकतां संप्रयातेन तारतूर्यनिनादिना ।
बलद्वयेन तेनासौ विवेश नगरं नृपः ॥२१॥
लाजपुष्पाञ्जलिव्रातैरावृष्टः पौरयोषिताम् ।
वणिङ्-मार्गमसौ पश्यन् परं परमनुत्तमम् ॥२२॥
पताकाध्वजसंबाधं मुक्ताजालमनोरमम् ।
नृत्यगेयपरस्त्रीकं स्वभूमावचलस्थितम् ॥२३॥

प्रविश्याथ गृहं तैस्तैः संयुतं नृपमङ्गलैः ।
सम्यक् संमानयामास प्रणतं प्रकृतिव्रजम् ॥२४॥
पुरोत्सवं भृशं कृत्वा दिनसप्तकमुत्तमम् ।
अकरोद् राजकार्याणि स्वानि स्वान्तःपुरे नृपः ॥२५॥
दशवर्षसहस्राणि राज्यं कृत्वा महीतले ।
सह चूडालया राम विरतो देहधारणात् ॥२६॥

विगतभयविषादो मानमात्सर्यमुक्तः
प्रकृतसहजकर्मा भुक्तनीरागबुद्धिः ।
इतिसमसमदृष्टि र्मृत्युमार्योऽथ जित्वा
दशशिशिरसहस्राण्येकराज्यं चकार ॥२७॥

भुक्त्वा भोगाननेकान् भुवि सकलमहीपालचूडामणित्वे
स्थित्वा वै दीर्घकालं परममृतपदं प्राप्तवान् सत्वशेषः ।
एवं रामागतं त्वं प्रकृतमनुसरन् कार्यजातं विशोक—
स्तिष्ठोत्तिष्ठ स्वयं वा प्रसभमनुभवन् भोगमोक्षादिलक्ष्मीः॥२८॥

एतत् ते सर्वमाख्यातं शिखिध्वजकथानकम् ।
अनेन गच्छन्मार्गेण न कदाचन खिद्यसे ॥२९॥
एतां दृष्टिमवष्टभ्य रागद्वेषविनाशिनीम् ।
नित्यं नीरागया बुद्ध्या तिष्ठावष्टब्धतत्पदः ॥३०॥
यथा शिखिध्वजो राज्यं कृतवानेवमीदृशम् ।
राम व्यवहरन् राज्ये भोगमोक्षमयो भव ॥३१॥

( इति चूडालाशिखिध्वज-निर्वाणं नाम त्रयोदशः सर्गः )

## ( व्याख्या )

(श्लोकाः)    ]

( १ ) मालवानां पुरे उज्जयिन्यामिति यावत् ।

( ३ ) सकलानां वापीकूपतडागारामादि कार्याणाम् ।

( ४ ) विनायार्थानां परेषामपि विनयशिक्षाहेतूनां वाक्यानां वदिता वक्ता ।

( ५ ) सर्वं वेद जानाति, तथापि मानना अभिज्ञाताभिमानस्तच्छून्यः ।। स्त्रैणं स्त्रीव्यसनादि ।।

( ६ ) उत्तमेन ओजसा स्वबाहुवीर्येण । अनेन पिता माण्डलिक एवासीत्, असौ स्वबाहुवीर्येण सम्राट् संपन्न इति गम्यते ।।

( ८ ) वर्षेषु गच्छत्सु, यौवने प्राप्ते सतीतियावत् । अथास्य चेतः कान्तां प्रति समुत्सुकं बभूवेति चतुर्थेन संबन्धः (vide verse ११)

( ६ ) विटपः शाखा तल्लक्षणे अन्तःपुरान्तरे मञ्जरीजालदोलासु अलिनां मिथुनेषु गायत्स्विति व्यवहितेनान्वयः । ( vide verse १० ) तदेवान्तःपुरं तत्सामग्रीकल्पनेन वर्णयति— रज इति ।

(११) शशिना शीकरैश्च शीतले । कदली प्रसिद्धा । कन्दल्यो गुल्मभेदा स्तेषां कच्छप्रायेषु तलेषु पल्लवेषु च लासिनि

लास्यशीले इति शैत्यमान्द्योपपादकं वायोर्विशेषणम्॥
वसदित्युक्त्या पूर्वमेव गुणसौन्दर्यादिश्रवणात् चूड़ालायामनुरक्तमिति गम्यते ॥

(१२) कुसुमसंभाराणां सौगन्ध्यलक्षणैर्मधुरैरासवैः क्षीवं मत्तं सत्, सवसन्तंवनमिव उदितं, रागपल्लवितं मनः, अन्यास्पदं कान्तातिरिक्तविषयावलम्बनं न चक्रे॥

(१३) तदौत्सुक्यप्रकारं प्रपञ्चयति—उद्यानेत्यादिना ॥

(१४) निवेद्यामि परिणेष्यामि।

(१५) ममेव तस्या अपि स्वाभिलाषप्रयुक्तसंतापः कदा स्यात्, येन शीघ्रं घटना स्यादित्याशयेनाह—मृणालेति।

(१८) वनानामुपवनानां च गुणवर्णनेन आवलितासु कथासु च अरमत ॥

(१९) कुमारीः हृदि पूजयामास बहु मेने सांकल्पिकभूषणैरलंचक्रे वा ॥

(२०) एतन्मन्ये-इति वचनं वसिष्ठस्य ॥

(२१) परस्परानुरागगुणशीलकुलादिसंपत्तिं विचारयन्। युवतीनां समूहोयौवतम्। 'भस्याढे तद्धित' इति पुंवद्भावः। तेनान्विताम्॥

(२२) प्रतिमां प्रतिच्छायामिव सदृशीमनुरूपाम्

(२४) विकासयामास प्रसादयामास ॥

(२५) हावभावादयः शृङ्गारचेष्टाभेदास्तदाढ्यै रङ्गै र्नवलतेव सा शुशुभे इति शेषः।

(३०) धुरवरैर्बलीवर्दैः कृष्टेषु क्षेत्रेषु सत् रमणीयं वर्षं वृष्टि र्ययोस्तथाविधयोर्मेघसस्यसंपत्कान्तयोर्द्युभूम्योरिव।

(३१-३२) मिथः अन्योन्यस्मात् शिक्षणाद् अन्योन्यसाम्यार्थित्वाच्च कोविदौ प्राज्ञतरौ अत एव सर्वगुणसाम्याद्नुरागेण ताद्रूप्यरञ्जनाच्च,जीवैक्यमिव संपन्नमित्याह— स्वरूपमिति । अन्योन्यहृदयस्थत्वाद् हृद्वयसंक्रान्तमेकमेवजीवस्वरूपम्।

(३३) यथा बालो बटुर्द्वादशवर्षं वेदब्रह्मचर्यमिति शास्त्रनियतकालाद्वेदविद्यां गृह्णाति तद्वत्। सा चूडाला।

(३४) असौ शिखिध्वजः॥

(३५) अमावस्यां प्राप्येतिशेषः। इन्द्वर्काविव मिथो हृदयसंस्थौ सन्तौ ऐक्यमुपागतौ॥

(३६) मिश्रितक्षीरोदकवद् एकरसौ। भूतलस्थौ भूमाववतीर्णौ शिवौ गौरीशंकराविव

(३८) समं तुल्यकालं तुल्यविषयं च विज्ञातं वक्तुं शीलं ययोस्तौ परस्परगुरुद्विजाभिज्ञादीनां चानुवृत्तिः प्रियहितविनयाद्याचारस्तत्परौ॥

(३६) लसन्ति शृङ्गारादिनवरस-लक्षणानि रसायनानि ययोस्तौ॥

(४०) ब्रह्माण्डखण्डस्य ब्रह्माण्डावयवस्य सत्यलोकस्य कुहरेषु गम्भीरसरस्सु राजहंसयोर्युग्मं मिथुनमिव ॥

( इति प्रथमः सर्गः )

**Questions –**

(1) Note the virtues of Śikhi Dhvaja as king and **as man**.
(2) Give a description of the Spring season.
(3) Fully describe the ideas of marriage enunciated in this chapter.
(4) Is marriage **divine** ? What is the underlying idea of—**ब्रह्माण्डखण्डकुहरेष्विवराजहंसयुग्मम् ?**
(5) Does wife enjoy the status of a **guru** to her husband ?

## II

( १ ) निर्भरस्पृहं दृढप्रेम । मिथुनं तत्स्त्रीपुंसद्वन्द्वम् ॥
( २ ) अथ शनैस्तारुण्ये गलति सति "तद्युग्मं" इति निर्णीय अध्यात्मसंमतं शास्त्रं विचारयामासेति दशमे संबन्धः॥
( ३ ) निर्णयहेतुं प्रथमं तत्कृतं विचारं प्रपञ्चयति—तरङ्गेत्यादिना । तरङ्गनिकराकारेण भङ्गुरेण देहेन, व्यवहरणशीले देहिनि । मरणं देहवियोगः ।
( ४ ) कुतो दुर्निवारणं तत्राह—हिमाशनिरिति ।
( ५ ) जीव्यते अस्मिन्नतिजीवनं देहादि ॥

(८) अप्रियां सपत्नीं कामयते यस्तस्य कान्ता प्रियतमेव ॥

(९) अरतिरिष्टविषयालाभनिमित्तं दौर्मनस्यम् । वैरस्यं रसशोषः । इहास्मिन् संसारे ।

(१०) दशासु जन्ममरणादि दुर्दशासु । तद्युग्मं मिथुनमिति विचार्य तत्र अध्यात्मशास्त्रमेव संसारव्याधिभेषजं निर्णीय तदेव विचारयामासेत्यन्वयः ।

(१४) सा चूडाला । इत्थं वक्ष्यमाणेनप्रकारेण ॥

(१५) प्रेक्षे विविच्य पश्येयम् । अस्मिन् कार्यकारणसंघाते अहं चेतनधातुः किं स्याम् इति ॥

(१६) मतौ स्थूलोहं गौरोऽहमित्यादिबुद्धि वृत्तौसत्यामनुभूयते न स्वत इति तस्य जडत्वमित्यर्थः । अस्माद्देहाद्-भिन्नहस्तपाद्याद्यवययात्मको मूढ : ।

(१८) कश्चिदपि पुरुषो न हीयते—परमपुरुषार्थात् प्रच्युतो न भवतीत्यर्थः॥ अथवा कश्चिदपि काम्योऽर्थो न हीयते न हानिं प्राप्यते तत्प्राप्त्यैव सर्वकामावाप्तेरित्यर्थः ॥ अथवा किंचिद्वस्तु दुःखसाधनमिति बुद्ध्या न हीयते न त्यज्यते ।सर्वस्याप्यानन्दैकरसस्वसंपत्तेरित्यर्थः ॥

(१९) चिन्मात्रमेवायतनं विस्तीर्णमित्यर्थः

(२१) चिरं, कालिकपरिच्छेदरहितम् । अनन्तं, देशवस्तुकृतपरिच्छेदरहितम ॥ ब्रह्मादिस्तम्बपर्यन्तप्राणि-

कर्मफलौघाश्चकारात्तत्साधनव्यापाराः, अफलादिका निष्फलसाधना वृथाचेष्टाश्च इदमाकाशमेव नान्यत्।

(२२) स्वं पारमार्थिकं रूपं प्राप्येति शेषः ॥

(२३) इत्थमिति। परमप्रबोधादात्यन्तिकमोहनिद्रापगमात् संशान्ता रागादयस्तमोविलासा अवस्थात्रयस्वप्ना यस्याः ॥

( इति द्वितीयः सर्गः )

**Questions:—**

(1) What is the nature of **Saṁsāra** ? How to overcome it ?

(2) What is the highest nature of **man** ? How to attain it ?

(3) Fully discuss the meaning of—यद् वै विज्ञेयतां कृत्वा न कश्चिद् हीयते पुनः ॥ Is self-realization the fulfilment or negation of love ?

III

(१) दिनानुदिनं दिनक्रमेण। नित्यमभीक्ष्णम्। प्रकृतिः स्वाभाविकं रूपं तस्मिन् स्थिता प्रतिष्ठिता ॥

(२) तस्यास्तत्प्रतिष्ठालक्षणान्याह—नीरागेत्यादिना ॥

(३) परिपूर्णो देहादान्तरान्मनसोऽप्यान्तरः प्रत्यगात्मा यस्याः

(४) सुचिरं प्राक् संसारश्रान्ता, पदान्तरे परमपदे विश्रान्ता॥

(६) न दृष्टं सकलद्वैतं यत्र तथाविधे पदे ॥

(७) यथा जरद्गवी वृद्धागौ दुरारोहतमं सतृणोदकं शैलाग्रं, दैवात्प्राप्य, अनाकुला संस्थिता भवति, तद्वत् सापि समालोकं जाग्रदादि सर्वास्ववस्थास्वेकरूपं प्रकाशं प्रत्यगात्मानं, जाग्रदाद्यसंबन्धात्मना, स्वभावेन प्राप्य, तस्मिन्नेवात्मन्यनाकुला संस्थितेत्यर्थः॥

(६) स्मयमानो विस्मयस्मेरास्यः॥

(१०) जगत् जगती। 'वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च' इति शतृवद्भावातिदेशात् 'उगितश्च' इति स्त्रियां ङीप् छान्दसत्वान्न कृतः। राजवती राजन्वती पूर्णचन्द्रवती वा यथा राजते तद्वद्राजसे॥

(१३) ऊर्जितं विवेकोर्जितम्। शान्तं शमादिगुणवत्। प्रशान्तमुपरतचापलम्॥

(१५) मरुरिव निर्जलजाड्यतया क्षीराब्धिरिव पूर्णतया च सुन्दरम्॥

(१६ स्थितिमचापल्यमुपादाय तैस्तैः प्राक्तनैरेवाङ्गैरवयवैस्तेजोतिशयेन वृद्धिं यातेव।

(१७) ऋतुपर्यये शिशिरात्यये॥

(१८) प्रयोगो रसायनादिप्रयोगः। आयोगो मन्त्रादिसिद्धिः॥ युक्तयो राजयोगहठयोगहठयोगोपायास्ताभ्य इति ततः॥

(२०) एवं राज्ञा पृष्टा चूड़ाला स्वशोभातिशयनिमित्तमाह, अहमिदं सर्वं मूढजनप्रसिद्धं शरीरात्मत्वं त्यक्त्वा पूर्णाद्वितीयब्रह्मात्मत्वं तत्वबोधेन आगता, न तु इदं परिच्छिन्नं सर्वं परित्यज्य सर्वमपरिच्छिन्नमन्यन्मयाश्रितम्। किं तत्। सत्यमसत्यम् मूर्तममूर्तं चेति।

(२१) उक्तमेवार्थं भङ्ग्यन्तरेण पुनराह यत् किंचित् परिच्छिन्नम् अकिंचिद् अपरिच्छिन्नं चेति।

(२२) हृदयपदेन हार्दंब्रह्म लक्ष्यते।

(२४) आसनोद्यानादिषु देहे स्थितेऽप्यहं पूर्णात्मन्येव तिष्ठामि, न तु भूषणसन्मानादिशारीरमानसभोगेषु, तदलाभप्रयुक्तलज्जासु वा ॥

(२६) वयस्याभिः सखीभूताभिः। तनुः कृशीभूतो विद्वेषो रागश्च याभिस्तथाविधाभिः स्वप्रज्ञाभिः शास्त्रदृष्टिभिश्च सह रमे ॥

(२७) अङ्ग हे नाथ, इह जगति अहं नयनरश्मिभिरन्यैर्वा इन्द्रियै श्चित्तेन च यत्पश्यामि तन्नकिंचिदनृतमेव। तेनेन्द्रियमनोदृश्येन विरहितं तु न किंचिन्निष्प्रपञ्चं वस्तु अन्तःपश्यामि। यतो हेतोरिति वर्णितरीत्या अन्तर्बहिश्च सम्यगबाधितरूपं पश्यामि। तेन हेतुना चिरं संततमुदिता परमाभ्युदयश्रीमती अस्मीत्यर्थः ॥

( इति तृतीयः सर्गः )

**Questions :—**

1. What are the essential marks of a person who has attained self-realization.
2. What beauty did Śikhidhvaja see in his wife after her attainment of self-realization ?
3. Mention the grounds on which it was stated--तेनाहं श्रीमती स्थिता ।
4. Why does the poet bring self-realization to woman first ?

## IV

(१) एवं वर्णितप्रकारेण स्वशोभातिशये निमित्तानि वदन्तीम् ॥

(२) बाला अप्रौढबुद्धिरसि ॥

(३) असंबद्धप्रलापतामेव दर्शयति—किंचिदिति । साकारस्यैव शोभा प्रसिद्धा,यस्त्वाकारसामान्यं त्यक्त्वा निराकारतां गतः स शून्यप्रायः कथं शोभते, इत्यर्थः।

(४) एकैवाकाशसंकाशे केवले हृदये रमे इति यत्त्वयोक्तं तदप्यसंगतमित्याह—भोगाभोगे इति । स्वयं साक्षाद् भोगः । मित्रभृत्यादीनामाभोजनमाभोगश्च । इत्यनयोः समाहारं परित्यज्य, तत्साधनं

वित्ताद्यखिलं च त्यक्त्वा य एक एव शून्ये खे पिशाचवद्भ्रमते स किल शोभते इति कथं संगच्छतामित्यर्थः ॥

(५) धीरधीः अतिक्रोधादिव धैर्यमात्रबलेन शीतोष्णक्षुत्तृषादिदुःखानि रुहमान इत्यर्थः ॥

(६) कष्टमिति—'न चेदिहावेदीन्महती विनिष्टिः' इत्यादिश्रुतेरिति भावः ।

(१०) बहुशः प्रतिबोधयामासेति व्यवहितेन संबन्धश्छान्दसः

(१२) यथा वेदाध्ययनकाले बालो वेदविद्यां सर्वपुरुषार्थानुकूलार्थप्रकाशनादिगुणशालिनीं न वेद तद्वत् ।

(१३) सर्वसिद्धिशालिन्यास्तस्याश्चेद्भर्तृ बोधने अशक्तिस्तर्ह्यन्येषां सिद्धिशून्यानां गुरूणां शिष्यबोधने-शक्तिर्दूरापास्तेति रामः शङ्कते—महत्या इति । तस्या अपि यत्नेन उपदेशप्रयासेन ।

(१४) 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्'इत्यादिशास्त्रोक्तमर्यादा व्यवस्था तन्मात्रपालनं गुरुकृत उपदेशक्रमो, न त्वसावनधिकारिण्यपि ज्ञानं बलाज्जनयितुं शक्नोतीत्यर्थः ॥

(१५) श्रुतेन शाब्देन परोक्षज्ञानेन, आत्मनस्तत्वभूतं ज्ञेयं ब्रह्म न ज्ञायते, इतरवस्तुवन्न विषयीक्रियते । पुण्येनापि स्वर्गभोगवन्न विनैव विचारं ज्ञानं जन्यते । विचारे

जनिते चरमसाक्षात्कारवृत्त्या रूढेनात्मनैवात्मा आत्मानं जानातीत्यर्थः । सर्पपदानि सर्प इव । इवार्थे व शब्दः ॥

(१६) अप्रजाः नष्टसंततिः पुमान् शोकादितमसा अन्धत्वमिव ।

(१७) अभीष्टैः सामन्तादिभिरुपनीतासु रत्नादिविभूतिषु ।

(१८) मुक्त इषुर्यस्मै तथाविधो दैवादविद्धो जन्तुर्मृगादि र्व्याधतो भीतो यथा एकान्तादिषु रतिमेति तद्वत् ।

(२३) चिन्तया चिन्तालक्षणेन कृशानुना ।

(२६) विभवभूमयो वैभवपदानि ॥

(२७) क्रोडीकुर्वन्ति श्लिष्यन्ति ॥

(२८) सुखाधिक्ये हेतून् दर्शयति—न देशेति ।

(२९) इदानीं वनराजी श्चूडालोपमात्वेन स्वीकृत्य वर्णयति स्तवकेत्यादिपञ्चभिः (29 to 33) प्रायेण सर्वत्र रूपकाणि ॥

(३०) कृतानि कुसुमान्येव कौसुमानि मण्डनानि याभिः । आसेव्याः काञ्चनशिला एव नितम्बतटास्तैः शोभिताः

(३१) तरङ्गलक्षणमौक्तिकैः प्रोताभिः सरिन्मुक्तालताभिरावृताः । मुग्धा मृगा एवात्मजाः शिशवो यासाम् ।

(३२) क्षुधितेभ्यो वितीर्णानि दत्तानि फलभोजनानि याभिः ।

पुष्पैरापूर्यन्त इति पुष्पापूरा लता एव बाह्वाद्यङ्गानि यासाम् ॥

(३३) त्वदधर इव आस्त्राद्यः स्यन्दस्तरङ्गप्रस्तावो यासां तद्भावं याताः ॥

(३५) सन्मन्त्रणे उत्तमविचारे।

(३८) गृहे शोभामहे। वसावेति यावत्। 'अस्मदो द्वयोश्च' इति बहुवचनम् ॥

(३९) पुष्पाणि भीयन्ते यासु लतासु तदीयशिरोगतपुष्पैर्मितया तुलितया जरसा सह,पुष्पमिताभिर्लताभिर्मैत्री, तत्साम्यदशायामेव युक्तेति भावः ॥

(४०) रन्ध्रस्य राज्यच्छिद्रस्य निमित्तमिति शेषः । एनः पापम्।

(४१) रोधयन्ति निवारयन्ति ॥

(४२) एवं विचालितोऽप्यविचलवैराग्यः शिखिध्वजस्तामनुनयति—अलमित्यादिना ॥

(४४) कठिनाः कठोराङ्ग्योऽपि । यथा कानने जाता उपवनजाताभ्यः कठोरा अपि पुष्पमञ्जर्यः शस्त्रालिं सोढुमक्षमास्तद्वदित्यर्थः ।

(४७-४८) उपमेययो विशेषणे उपमानयोरपि योज्ये।

(४९) धृता व्योमापगा स्वसखी गङ्गा येन तथाविधं शर्वं

संश्लिष्यति स्वयमपि कामादालिङ्गतीति संश्लेषा तथाविधा यमुनेवेत्युत्प्रेक्षा । 'श्याद्व्यधा' इति श्लिषः कर्तरि णः ॥

(५०) दिग्वधूभिर्मुक्त उत्सृष्टो मङ्गललाजानामञ्जलिरिव व्योमलक्षणे कुट्टिमे सौधतले तारागणो ददृशे ॥

(५१) स्वनाथान्वेषणेन श्रान्ता कुमुदादिकुसुमैर्हासवती । यौवनं स्वयौवनफलमिति यावत् ।

(५५) यथा राहोर्मुखं चन्द्रमोक्षकाले स्वैरं स्वैरं शनैः शनैः चान्द्रप्रभां प्राचीं दिशं प्रति त्यजति तद्वत् ॥

(५६) लीना वधूर्यस्मिंस्तल्लीनवधूकं तथाविधानमर्धाञ्चलमर्धभागो यस्य तथाविधमंशुकं प्रावरणवस्त्रं यस्मिंस्तथाविधाच्छयनात् पर्यङ्कात्। लक्ष्म्याः कान्तिभिः सहिताः सलक्ष्मीकान्तयो लोलाश्चोर्मयो यस्मिंस्तथाविधात् क्षीरार्णवादिव ।

(५७) वीरक्रमश्चोरदुष्टनिग्रहार्था निशाचर्या, तत्र वीरक्रम एवानुचरव्रजं योजयित्वा नियुज्य । पूर्णधी र्निस्पृहः ॥

(५८) उग्रां भीषणाम् । अरण्यानीं महदरण्यम् । 'हिमारण्ययोर्महत्वे' इत्यानुक् ॥

(५९) अतिवाहिता उत्तीर्णा ॥

(६०) अर्केण समं विशश्रामेत्युक्त्या आयासं जगामैवेति गम्यते ॥

(६१) तमस्विनीम् रात्रिम् ।

(६२) अत्यन्तदूरस्था जनता जनसमूहाः,जनपदा इति यावत्, पुराणि च यस्मात् ॥

(६४) रटन्ति सशब्दं प्रवहन्ति वंशप्रणालद्वारा सलिलानि याभ्यस्तथाविधाभिर्वापीभि र्बलिता बलवत्तराः कृताः पादपा यस्मिन् । पूर्वं भूता भूतपूर्वा द्विजाश्रमा यस्मिन् ।

(६६) शाद्वलैर्हरिततृणवत्प्रदेशैः श्यामे ( नडशादाड्वलच्

(६७) उटजः पर्णशाला तद्रूपमालयम्

(७०) विधिर्धाता जगति स्वसृष्टिब्रह्माण्डे क्रमं व्यवहार-साधनजातमिव ॥

(७१) ततस्तृतीये इत्यर्थः ॥

(७३) तं प्रागनुभूतं नवं नृपतिविलासं न सस्मार । तत्कुत-स्तत्राह—कं वेति । विवेके हृदि स्फुरति सति राज्य-लक्ष्म्यः कं वा हरन्ति, वाञ्छाजननेन वशीकर्तुं शक्नुवन्ति, न कंचिदपीत्यर्थः ॥ (इति चतुर्थः सर्गः

**Questions:—**

1. On what grounds, does Sikhidhvaja

dissuade his wife from her spiritual occupation ?

2. Criticize the statement—यस्तिष्ठत्यात्मनैवैकः स कथं किल शोभते ।
3. Explain the meanings of (a) ज्ञप्तेस्तु कारणं शुद्धा शिष्यप्रज्ञैव राघव (b) जानात्यात्मानमात्मैव सर्पः सर्पदानिव ।
4. How did detachment from things of the world arise in the mind of Śikhidhvaja? What steps did he take to secure peace of mind ?
5. Give in Sanskrit a descriptionof (a) forest (b) night (c) scene of renunciation.
6. Explain with reference to the context the meanings of (a) राज्यलक्ष्मि नमस्तुभ्यम् (b) भर्तुर्विघटयन्तीच्छां न स्वप्नेऽपि कुलस्त्रियः (c) कुटुम्बभारोद्वहनं पत्यौयाते व्रतं स्त्रियः ॥
7. Why did not Chūḍālā permit her husband to go to the forest ?

V

(२) ग्रामसुप्तेवेति । राजवियोगभीत्या सदा जाग्रत्यपि दैवान्निद्रया हृतेति द्योतनार्थम् ।

(३) पत्या निर्हीना पत्या त्यक्ता ॥

(४) कुत्सितेन द्वारकर्दमादिजलेन सिक्ता ॥

(७) विधिना शास्त्रेण भर्त्रैव प्रकृता प्रथमा गतिः शरणम् उद्दिष्टा विहिता।

(८) वातरन्ध्रं वातायनं तेन ॥

(१०) वेतालयोग्ये समये उदितं प्रकाशमानम्।

(११) भर्तुर्भविष्यद्भाविपदार्थजातम् ॥

(१२) पुरःस्थितमिव योगबलादपरोक्षं दृष्ट्वा, संवादयितुं तदनुरूपमाचरितुमिति यावत्।

(१६) कलमगोपिकाः शालिपालिकाः ॥

(१८) ऋतुसहितो वत्सरः ॥

(२१) कषायाणां रागादिवासनानां पाकमालक्ष्य तत्तावत्कालं तया पालितं प्रतीक्षितमिति यावत्।

(२२) चन्द्रबिम्बलक्षणस्यामृताम्भोधेर्महावीचिपरम्पराभूतां निर्मलज्योत्स्नाम्। अम्बरस्यान्तर्वर्तितां गता ददर्श।

(२३) स्वभर्त्रा मेघेन अवियुक्ता विद्युतो व्यलोकयत्।

(२४) आत्मना मनसैवोवाच। किमुवाच। तदाह—अहो इत्यादिना। मम मनः विवेकैर्बोध्यमानमपि, इति उत्कण्ठते।

(२८) मुधा व्यर्थमेव ताण्डवितं सत् किं स्थितमसीत्यर्थः ॥

(२६) अथवा नायं दोष इति शेषः । कुतस्तत्राह—भर्तारमिति ॥

(३०) इदानीं देहं प्रत्याह—वामे हे स्त्रीशरीर । यदालिङ्गनाद्यर्थं समुत्कण्ठसे स ते भर्ता जरां यातस्त्वन्निरपेक्ष एव भवेत् संभाव्यत इत्यर्थः ॥

तथा अस्य वासनालतिका यथा प्रावृण्नदीक्षुद्रा महानदगता सती न पृथगवशिष्यते तथा संपन्नेति शेषः । एकान्ते रतः आसक्तः अत एव एकात्मा । नीरसो निरिच्छः ।

(३२) एवं नैराश्यप्रदर्शनान्निरुत्साहं मनः पुनरुज्जीवयंतीवाह तथापीति । अस्त्वेवंविधः सः, तथापि हे चित्त, का तवोकंठा । अहं योगेन वक्ष्यमाणोपायेन भर्तुर्मतिमुद्बोध्य तत्वज्ञीकृत्य, उत्कण्ठया युतं पतिं, भवता सह श्लेषयिष्यामि, न त्वयोत्कण्ठा कार्येति ॥

(३४) यद्यस्माद्धेतोर्भर्ता तत्वबोधान्मया समं तुल्यरूपमन्तर्बाह्यार्थचिन्तितं यस्य तथाविधः संपत्स्यत इति शेषः ।

(३६) अब्दान्मेघान ।

(३६) भृङ्गीशं प्रसिद्धं रुद्रद्वारपालमिव ।

(४२) अनात्मज्ञता अज्ञानं तदात्मकम् ।

(४३-४४) यतो यस्माद्धेतोर्मे अतिप्रियः पतिर्मोहघनेन हृदि क्षुण्णामभिहतामिमां दशामभ्यागतस्तत् तस्माद्धेतो रिहास्मिन्कुटजे अद्यैव अवश्यं नाथं पतिं विदितवेद्यतां तथा भोगमोक्षश्रियं नयामि प्रापयामीति परेणान्वयः।

(५२) शृङ्गस्थलग्नप्राय इन्दुर्यस्य तथाविधमचलं पर्वतमिव स्थितम्।

(५५) पत्रनिर्मितं विष्टरमासनम्।

(५६) करोत्करे करतले। कुमुदखण्डस्य पल्लवे, प्रालेयं हिमकणजालमिव।

(६०) अखिलं शास्त्रोक्तमनतिक्रम्येति यथाखिलम्। पदार्थानतिवृत्तौ यथार्थे अव्ययीभावः।

(६१) न तथान्यतः प्राप्तेत्यनुषज्यते।

(६२) शान्तानामक्रोधनानां यतिवनस्थानां व्रतभूतमिदं महावननिषेवणमसिधारासमं क्रूरमत्यन्तावधाननिर्वाह्यं चेत्यर्थः॥

(६३) ज्ञायसे महाप्रभाव इति शेषः।

(६८) ननु धर्मज्ञया चूडालया कथमिदमनृतमुच्यते। नैष दोषः। तत्वज्ञानबलेन सार्वात्म्यप्राप्तेर्वा, सोऽहमित्या-

द्युक्ति र्नानृता। न च भर्तृवञ्चना दोषः भर्तुर्विद्या-विश्वासजननेन परमहितस्यास्य वाक्यस्य वञ्चनात्वा-भावादिति।

(७०) मातुरभावात् पितुर्मात्रादय एव स्वस्य मात्रादय इत्या-शयेनाह—मातृष्वसेति, पौत्री ब्रह्मण इति शेषः।

(७४) आस्थितस्तप इति शेषः। हे तत्वज्ञ। पुनर्जन्मनो भीतः।

(७५) तप्ये संतप्तोऽस्मि तपश्चरामि च।.

(७७) अयत्नः कुण्ठितप्रयत्नः। अफलः अप्राप्तफलः। एकोऽसहायः। घुणैः काष्ठकीटैः क्षुण्णः क्षतः।

(७८) इमामुपवासदेवातिथिपूजादिरूपाम्। विश्रान्तये परि-गृहीतमपि कर्मसमुच्चितमुपासनं मे विश्रान्त्यजननाद् विषमिव स्थितं, तत्कस्य हेतोस्तद्वदेति भावः।

(८२) अज्ञानवान् ज्ञानं विहाय तप एव मोक्षहेतुरिति निश्चित्य किं स्थित इत्यर्थः।

(८३) विवेकहीनस्य बहिर्मुखस्य दण्डकमण्डल्वाद्यल्प-मपि ममतादिविषयतया अनर्थायालमित्याशयेनाह— इत इति।

(८४) यदि तपोऽप्यनर्थो हेयस्तर्हि क उपादेयस्तमाह— कोऽहमिति। नावेक्षसे न विचारयसि।

(८५) पारावारविदां परमानन्दसमुद्रस्तद्विदामित्यर्थः ॥

(८६) सा ज्ञानयुक्तिः ॥

(९१) श्रद्धस्व सोम्येति श्रुतेरश्रद्दधानेषु कृतोऽप्युपदेशः स्थाणोरग्रे काकरुतवद् व्यर्थो निन्द्यश्चेति, प्रथमं श्रद्दधानो भवेत्याह—यदीति। तत् तर्हि इदं त्वत्पृष्टं ज्ञानं यथा यादृशं तद्वदामि वक्ष्यामि।

(९२) लीलया अनास्थया पृष्टस्य वक्तुर्वाचः। अक्षसंविद्-श्चक्षुःसंनिकर्षः।

(९४) मुक्तं हेतुभिरुपपादनं यस्य तथाविधमपि प्रमाण-बुद्ध्या यथा आदत्ते।

(९५) शुभं स्वहितमित्येव भावयन् कर्णसुखावहं गीतं गानमिव प्रीत्या शृणु ॥ ( इति पंचमः सर्गः )

**Questions:—**

1. Explain the meanings of— (a) भर्तैव गतिरुद्दिष्टा विधिना प्रकृता स्त्रियः ॥ (b) अथवा चित्त भर्तारं स्वं प्रत्युत्कण्ठसे सखे ॥
2. How does Chudala reconcile spiritual life of an individual with his social relations.
3. Comment on— अहमासादयिष्यामि यद्भर्ता समचिन्तितः।

4. Amplify the meaning of —सनम्रानन्दवृन्दानामेतदेवोपरिस्थितम् । यत्समानमनोवृत्तिसङ्गमास्वादने सुखम् ॥

3. Write notes on —भोगमोक्षश्रीः, कषायपाकः, अर्घ्यम् ।

6. Elucidate the meanings of—यस्य नास्त्यम्बरं पट्टं कम्बलं किं त्यजत्यसौ (२) इत्यनर्थविलासेऽस्मिन् रमसे किं महीपते ।

7. Describe the details of hospitality observed in ancient India and render in your own Sanskrit the meaning of—
देवादप्यधिकं पूज्यः सतामभ्यागतो जनः ॥

## VI

(२) अनुष्ठेयमभूदिति शेषः ।

(५) अहंकारो हि राज्यादिकं ममेति कल्पयंस्तत्स्वामितां मन्यते न त्वात्मेति, प्राप्त्यभावान्न सर्वत्यागस्तव सिद्ध इति भावः

(६) यद्यहंकारे तादात्म्यारोपादात्मा राज्यादिस्वामितां प्रतिपन्न इत्युच्येत तर्हि तत् त्यागादेव राज्यादित्यागः

सिद्ध्येन्नान्यथा । स च त्वया न त्यक्त इत्याशयेनाह—तवेति ॥ 'केवलं सर्वसंत्यागे शेषिताहंमतिस्त्वया' इति कुत्रचित्प्रागेवोक्तम् ।

(७) शैलवृक्षादीनां त्विदानीं परिग्रहान्न तत्त्यागमन्तरेण तव सर्वत्यागसिद्धिरित्यस्याशय इति मन्यमान शिखिध्वज उवाच—तदप्येतत् त्यजाम्यहम् । एवमग्रेऽपि राज्ञस्तात्पर्यभेदभ्रम उह्यः ॥

(८) वासना ममता ।

(१५) कुड्यानि भित्तयः । अल्पाकुटी कुटीरः ।

(१६) विष्टरादासनात् . अवदातात्मा शुद्धचित्तः ।

(१७) अंशुमान् सूर्यः ।

(१६) अणौ ज्वलेरकर्मकत्वाण्णौ कर्तुः पावकस्य कर्मता ॥ भाण्डोपस्करस्यापि तत्फलभस्मीभावाश्रयत्वात् कर्मता विवक्षिता । ज्वलेर्मित्वविकल्पादुपधाह्रस्वाभावः ।

(२०-२१) इदानीमक्षमालां त्यक्तुकामः कृतोपकारविस्मरण-दोषं परिहरंस्तामाह—एतावन्तमितिद्वाभ्याम् । हे पतिप्रिये स्वामिभक्ते । न जातः परक्लेशेन स्वार्थ-साधनबुद्धेर्भेद उच्छेदो यस्य तथाविधेन मया त्वं यत् एतावन्तं कालं वृत्ता परिवर्तनश्रमं प्रापिता, तेनैव

ते तत्र मत्सेवनं कृतं पर्याप्तमस्तु । यथा पवनः कल्पान्ताग्नौ व्योम्नस्तारालीं नक्षत्रमालां क्षिपति तद्वत्। अनेनाक्षमाला स्फाटिकीति गम्यते ।

(२२-२३) प्रतिकृतं प्रत्युपकरणं न कृतम् ॥ येनैवेति – अनेन स कमण्डलुः पूर्वं कस्माच्चिच्छ्रोत्रियाच्छुद्ध्यर्थं वह्निदाहेन संशोध्य स्वयं गृहीतः स्थितः, स पुनर्दाहेन संशोध्यान्यस्मै श्रोत्रियाय दत्त इति गम्यते ।

(२४) स्वेन मनसा वृथा ममता संकल्पेन कल्पितं समर्थितं तत् कुटीरूपं तृणमन्दिरम् ॥

(२५) स्वस्य वसनं वल्कलम् । भुज्यते यस्मिंस्तद् भोजनं पत्रपुटकाद्यपि ।

(२६) पूर्वं दृष्टा पश्चान्नष्टा अदर्शनं प्राप्ता जनस्थितिर्यत्र । 'पूर्वकाल' इति समासः ॥

(२८) केवलाकृतिर्देहमात्रावशिष्टः ।

(३०) तत् त्यागसुखमभिनयन्नाह—यावदिति । बन्धहेतवो विषयाः ।

(३२) बाह्योपकरणत्यागमात्रेण भ्रान्त्या बालस्येव तस्य सर्वत्यागसुखाभिनयमसहमानः कुम्भ उवाच— सर्वमेवेति । अभिनयं व्यंजकचेष्टाविशेषम् ॥

(३६) श्वभ्रे भृगौ।

(३७) निरागस्कं निरपराधम्। महावटे भृगौ। तर्णकं स्ववत्सम्॥

(३८) निरागस्कतामेव दर्शयति—जड़ इति, तव अपराध इति शेषः।

(४०) तरुणा किमपराद्धम् तद्वद्देहेनापि साधुनात्मनः किमपराद्धमित्यर्थः।

(४१-४२) विषमो दुःसाध एव संपद्यत इत्यर्थः तस्य देहक्षोभकस्याहंकारस्य त्यागं विना त्यागिता न सिद्ध्येदित्यर्थः॥

(४५) सर्ववासनास्पदत्वात् सर्वम्। सर्वविषयेषु ऽसृत्वात् सर्वतः। संकल्पेन सर्वजनकत्वात् सर्वैककारणे।

(४६) सर्वत्र ह्येयम्। सर्वदा च त्याज्यं त्यक्तुं योग्यं यत्सर्वं त्वयोच्यते तत्किमित्यर्थः॥

(४७) चित्प्राधान्येन जीवनामकं, क्रियाप्राधान्येन प्राणादिनामकं चित्तं लिङ्गम्।

(४८) भस्त्राध्मानदृतिः। भस्त्राभरेण कर्मारेण॥

(४९) द्वैतं कार्यविभागाविर्भावपरम्परा। ऐक्यं कारणे तिरोभावक्रमश्च लयं बाधं याति।

(५०) सर्वत्यागे सर्वं स्वायत्तीकृत्य लब्धमित्याह— येन सर्वमिति। यद्यपि सर्वं त्यक्त्वा स सर्वशून्यतामापन्नस्तथापि तेन त्यक्तं जगदाश्रयान्तरालाभात् तमेवाश्रित्य यावद्व्यवहारं सत्तास्फूर्ती लभत इति स एव व्यवहर्तृदृशा त्रिकालस्थसर्वलब्धेत्युच्यत इति भावः।

(५१) अत एव सर्वत्यागे सर्वबाधादव्यवहार्यदृशा आत्यंतिकस्नेहक्षयान्निर्वाणदीपदृष्टान्तं, सर्वगतस्वरूपज्योतिषैव सर्वव्यवहारप्रकाशनाद् व्यवहारदृशा सस्नेहदीपदृष्टान्तं चाह—अस्नेहेनेति॥

(५३) खस्य व्योमलेखिकाः छिद्रकारिकाः टंकिका काश्चिदपि न प्रबाधन्ते, तद्वत्॥

(५५) सर्वत्यागे शून्यतापत्तिं वैभवहानिं च वारयति—सर्वं त्यजतीति। वारिधौ अम्बु यथा यथा बडवाग्नौ विशति तथा तथा नदीभ्य आयात्येव तद्वत् सर्वं विभवजातमुपतिष्ठत इत्यर्थः॥

(५६) प्रथमं त्याज्यं सर्वं मनसा परित्यज्य, अथो अनन्तरं येन त्यजसि तन्मनश्च विहाय, तदनन्तरं त्यागाभिमानलक्षणमहङ्कारमलं च विमुच्य, जीवन्मुक्तरूपो भवेत्यर्थः॥

(५७) चित्तत्यागं चित्तत्यागोपायम् ॥

(५८) निरस्तं न ममेति त्यक्तमपि । अप्यर्थो हिशब्दः ॥

(६०) वासना रागवासनेत्यर्थः । उदाहृतो लोके । तथा च लौकिका आहुरपूपेषु मम वासनास्ति मण्डकेष्वस्य चित्तमिति ॥

(६१) वेद्मि त्वद्वचसेत्यर्थः । वज्रस्य निगिरणादपि दुःसाध्यः । सति मौर्ख्ये औदासीन्यस्यैव दुष्करत्वादिति भावः ॥

(६२) जगल्लक्षणं यदब्जं तन्मृणालस्य ॥

(६४) सर्वस्य वक्ष्यमाणमूलांकुरशाखापल्लवादेर्नाशः, स एव संसृतेरपि क्षयः, स एव चित्तस्य संत्यागः, न तु बाह्यार्थत्यागवन्ममतानिवर्तनमित्यर्थः । दीर्घदर्शिभिरपरिच्छिन्नात्मदर्शिभिः ॥

(६५) उक्तमर्थं विमृश्यानुवादेनानुमोदमानः शिखिध्वजस्तत्रोपपत्तिमाह—चित्तेति । चित्तं हि व्याधिः, नहि व्याधेः शतशोऽपि ममतावर्जनलक्षणेन त्यागेनाभावोऽनुभूयते किंतु चिकित्सयोच्छेदेनैव । अतस्तदुच्छेदाय तन्मूलशाखापल्लवादि वदेत्यर्थः ॥

(६६) अहमज्ञतात्मा बीजं यस्य ! सशाखाफलपल्लवस्य

द्रुमस्योन्मूलने तत्स्थानाकाशमिव निरावरणविक्षेपं हृदयं यस्य तथाविधो भव ॥

(६६) त्यक्तमपि मूलोच्छेदाभावात् पुनः पुनर्मामुपैति ॥

(७०) कोऽहंस्यामिति विचारादिसाक्षात्कारान्तरूपधृक् ॥

(७१) वास्ये वासनाकर्मणि विषये ॥

(७२) अशेषानर्थकारिणी अहं जगदित्येषा प्रतिपत्तिर्मे तत्साक्षिणो मम स्वप्नवन्मिथ्यैवाभाति । नूनं निश्चयेनेत्यर्थः ॥

(७४) सिद्धिर्मोक्षः । आपदो बन्धः । सत्वमहमेवानहमिति शुद्धकैवल्यात्मबोधवान् भव ॥

(७५) शुद्धस्य कारणत्वासंभवाद् दृश्यपदार्थाभावः, तदभाव-निश्चयात् संकल्पक्षयः, संकल्पक्षयादहंभावक्षयः, तत्क्षयाज्जीवभावादिसंसारक्षयः, ततश्चब्रह्ममात्रा-वशेष इति ॥

(७६) प्रागपि यदिदं जगदाकारेण भासते तत्परमार्थतो ब्रह्मैव, तथास्थितं तत्वबोधेन च नापूर्वं, किंतु परे स्वभावे स्थितं परमेव परेणापूर्वं समं स्वरूपमेव विजृम्भते प्रकटी भवति ॥

(७८) संनिपातेन विवृत्ताः कुपिता धातवो यस्य तथाविधः

सन् सन्निहितमृत्युरिति यावत् ॥

(७६). चित्ताद्यस्तीत्यनुभवस्य तर्हि का गतिरिति चेद् भ्रान्तित्वमेवेति दृष्टान्तैराह भ्रमाकृतीति ॥

(८०) व्याप्तं ग्रस्तम् ॥

(८२) संभ्रमो मरणादिभयम् ॥

(८४) इतरा क्रियाशक्तिरपि त्वमेव ॥

[ नह्यंशुव्यतिरेकेण शशाङ्क उपलभ्यते। Mark the influence of Yoga Vasistha on Shah Barakatullah who in his Pem Prakash writes—चन्दा चंदहि देखियत, दीप न देत दिखाय]

(८५) सकृद् विलसत् सकृत् प्रभातम्। कलाप्रमाणेन स्वरूप परिचयस्तदाख्यालीला यस्य तथाविधं सत् सन्मात्रतया उदितम्। आद्यं सर्वव्यवहारेभ्यः प्राक्-सिद्धम् यद् वस्तु तदेवात्मतत्त्वमित्यर्थः ॥

( इति षष्ठः सर्गः )

**Questions :—**

(1) Fully explain the meaning of :—तवास्त्यन्योऽपरित्यक्तः सर्वस्माद् भाग उत्तमः। तं परित्यज्य निःशेषं परामायास्यशोकताम् ॥

(2) Write explanatory notes on—वासना,

चित्तम्, अहंभावः।

(3) What is the character of true renunciation ?

(4) Discuss the philosophy of life taught by his wife to Sikhidhvaja, in this chapter.

## VII

(१) परिणतः पूर्वभावं विहाय तद्भावं प्राप्तः।

(६) भोगलक्षणकषायाणां पाके निवृत्ते सति।

(१५) चित्ते त्यक्ते जीवन्मुक्तानां केनान्तःकरणेन व्यवहारसिद्धिरिति प्रष्टुं राजा पीठिकां रचयति—एवं हीति।

(१६) यथा भर्जिता वितुन्नाश्च लाजा न व्रीह्यादिशब्दवाच्या नाप्यङ्कुरादिजननक्षमास्तद्वत् तत्वज्ञानभर्जितं निरावरणं सत्वं न मनःशब्दवाच्यं नापि पुनर्जन्मसमर्थमित्यर्थः।

(२३) तवापि सत्वबलादेव यावज्जीवं व्यवहारः सेत्स्यतीत्याशयेनाह—सत्ववानसीति।

(२६) सर्वपदार्थेषु सदंशः सत्वेनैव ग्राह्यः, असदंशस्तु नित्यनष्टत्वेनैव ग्राह्यश्चित्तचाञ्चल्यं विनेत्याह—सत्वमिति।

(२८) सम्यग्भमावरणतया राजत इति सम्राट् साक्षात्क्व

आत्मा तद्भावस्य भाजनमित्यर्थः ।

(२९) स्पन्दास्पन्दौ तत्साक्षिमात्रतादर्शनेनैकतां नीत्वा साक्षिणमपि ब्रह्मात्मैक्यमागत्य प्रापय्य भूमानन्द-भावेन यथाकामं पूर्णकामतया तिष्ठेत्यर्थः ।

(३०) तयोः स्वरूपेणैक्यविरोधेऽप्यधिष्ठानसाक्षिचिन्मात्र-रूपेण न तद्विरोध इति स्वाशयप्रकटनेनाह—एक-मिति । घाः इव स्पन्दते स्पन्दात्मना विवर्तते ।

(३१) 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुतिभिर्यद् गीतम् । अङ्गेत्यामन्त्रणे ।

(३२) कदाचित्समाधिप्राधान्येन कदाचिद् व्यवहारेण च यथेच्छसि तथा तिष्ठ ।

(३३) समात्मा समरसः सन् अदितात्मा अखण्डित-स्वभावः सुष्वाप । सुषुप्त इव विशश्रामेत्यर्थः ॥

( इति सप्तमः सर्गः )

**Questions:—**

1. Note the difference between चित्त and सत्त्व.
2. Having attained 'Samata', how should a man live in the world and be of greater use to it ?
3. Can family be a school for getting spiritual knowledge ?
4. Explain the meaning of:—चूडालादिसमासङ्गाद्

भवेज्ज्ञत्वं सुखेन ते ।

5. What do you understand by साम्राज्य ?

## VIII

(१) चूडालां तद्वृत्तान्तमिति यावत् ।

(२) ततार पुप्लुवे ।

(३) देवपुत्राकृतिं कुम्भवेषम् । स्त्रैणं स्त्रीरूपशरीरमाकारम् ।

(४) नृपकर्म राजकार्यं प्रजानुरञ्जनमित्यर्थः ।

(६) कुसुमं पुष्पाञ्जलिम् ।

(८) रम्येऽपि स्वर्गे सांप्रतं न तिष्ठामि किंतु तव समीपे तिष्ठामि । हे अङ्ग, यतो बहूनामपि रम्याणां मध्ये, चित्तस्य यदेवाभीष्टं भवति तत् उद्यत् उद्योगप्राप्यमेव सत् पुरः स्थितं भवति नोद्योगं विनेति । त्वद्दर्शनोद्योगवशादेव ममागमनमित्यर्थः ॥

(१०) कुलाचले अस्मिन् मन्दरे ।

(१२) ओमित्यभिमतौ ।

(१५) शंसन्तौ परस्परानुभवं कथयन्तौ ।

(१८) कामेन अङ्गधर्मेण रागेण न वञ्चिता ।

(१६) यथाप्राप्तं भोगं प्रति अतिष्ठताम् अनिवृत्तगतीनाम् । एकस्यां भोगनिवृत्तावेवाग्रहो निर्बन्धस्तदात्मिका या वृत्तिः सा मूढतैव ॥

(२०) एवं सर्वसामग्रीसत्त्वेऽपि या स्वभर्तरि न कामवती सा हतेत्यर्थः ।

(२३) अनिन्द्यं स्वम् उदारार्थं भोगं समुज्झता किं किमधिकं फलं कृतं भवेत् । नकिंचिदित्यर्थः ।

(२४) प्रेक्षया स्वप्रज्ञया । मयि रमते रतिसुखं लभते ।

(२६) आस्थानं देवर्षिसभामेलनम् । हरेरिन्द्रस्य ।

(२७) पितुर्नारदस्य ।

(२८) निर्विकल्पं नियतमिति यावत् ।

(२९) कान्तां मनोहराम् । नन्दनवृक्षः कल्पतरुस्तज्जां मञ्जरीम् ।

(३०) अदर्शनं दृष्टिप्रसरयोग्यप्रदेशावधि । अब्द मेघम् ॥

(३१) स्वं चूडालारूपम् । आययौ प्राप ।

(३२) स्फुरत्पताकमन एव मञ्जरितः संजातमञ्जरीक आकारः संस्थानं यस्य तथाविधकल्पवृक्षोपमम् ।

(३४) यथा वृक्षात् फलं पुष्पं वा पतति तद्वत् ।

(३५) श्यामा यौवनमध्यस्था चूडाला ।

(३६) आदृतः सादरः ।

(३७) विमनाः खिन्नमना इव लक्ष्यसे । संरम्भं लक्षणया मनस्तापम् ॥

(४०) पित्रा सहेति शेषः ।

(४३) शीकरधाराभिर्धौतं क्षालितमङ्गचन्दनम् अङ्गरागो यस्य तम् ॥

(४४) तमिस्राभिसारिकया समो दृश्यसे इति मया उक्तम् ।

(४७) स्त्रिया इदं स्त्रैणं वपुः अभ्याहरन् आविष्कुर्वन् ।

(४८) ते पुर इतिशेषः । प्रस्फुरत्तारकामाला इत्युपमान-विशेषणाद् उपमेयाः शिरोरुहा अपि मुक्तादिमाला-सहिता इति गम्यते ॥

(४९) अम्बराणि वस्त्राणि ।

(५०) पट्टांशुकः पट्टवस्त्रम् । एवमाच्छादितप्रदेशेष्वपि लिङ्गविनिमयः संपन्न इति ज्ञेयम् ॥

(५१) कुमारीधर्मिणी अनूढाचारा । ( इत्यष्टमः सर्गः )

**Questions.**

(1) Amplify the meanings of:—(१) रम्ये स्वर्गे न तिष्ठामि समीपे तव सांप्रतम् (२) स्वर्गादतितरामेव त्वत्सङ्गो मम तुष्टये ॥

(2) What is the indication of exchange of flowers in verse 6 and 9.

(3) Is verse 20 a criticism of the ascetic view of life propounded by Buddhism ?

(4) What festival is indicated in verse 26. ?

(5) Is there any indication of a particular

dress in लम्बानि अम्बराणि (49) and पट्टांशुक: 50)?

(6) Comment on the line यथास्थिता हि नियतिर्न संत्याज्या कदाचन ॥

IX

(३) निपुणीकर्तुं सफलीकर्तुम् । ददामि अचिरादेव दास्यामि ॥

(६) तत् तस्माद्धेतो: ।

(७) स्वरूपं स्वात्मभूतमेवानुपश्यामि ।

(८) जन्यत्रो विवाह: । द्वयोरेव गान्धर्वविधिनेति भाव: ।

(१०) मणिमयकन्दरलक्षणे मन्दिरे ।

(११) विवाहोत्सवोचितनरनारीगणस्थानीयतया वृक्ष-लतादिसंपत्तिं दर्शयति—पुष्पभारेति ।

(१२) परिपश्यन्तु विवाहोत्सवमितिशेष: ।

(१६) (महाराजं वरम् इतियावत्) मङ्गलं दधिदूर्वाक्षत-सिद्धार्थादि तत्पूर्वकम् ।

(१८) जन्यत्रस्थानं वेदिमूलम् । क्रमात् शास्त्रोक्तक्रमात् ॥

(२०) संध्याक्रमे संध्यावन्दनविधौ ।

(२१) मिथुनानां प्रीतिकरत्वादेकसखी यामा त्रियामा ।

(२२) स्त्रीत्वं गच्छन् कुम्भ: । मृगजै: कस्तूरीपौष्कल-कादिभि: । कुंकुमै: काश्मीरै: ।

(२३) मौलिपदेन चूडामणिर्लक्ष्यते (Hindi मौड़)। इन्दुरूपिणा चन्द्रसदृशेन।

(२४) वधूचितविलासवान्।

(२५) कामाय कामरूपाय वराय। (Cf. the Vedic ritual—कोऽदात् कस्मा अदात्, कामोऽदात्, कामो दाता, कामः प्रतिग्रहीता, कामैतत् ते)॥

Note the Christian ritual based on Hebrew tradition to this effect—Who gives and who receives? Love gives and Loves receives.

(२६) अतएव कामत्वेनैव भर्तारं कल्पयित्वा मनस्याह—इयमिति।

(२७) अग्रस्थे गहने वनवेदिदेशे स्थितम्।

(२८) लसन्तं शोभमानं पतिम्।

(३०) (क्रमेण शास्त्रोक्तक्रमेण) संज्वाल्य हुत्वा अभ्यर्च्य च।

(३१) तवोरसि स्थितो हारो मेरौ प्रसिद्धस्य गङ्गाप्रवाहस्य आभां शोभां धत्ते।

(३२) खचितकेसरैर्घटितकिञ्जल्कैः।

(३३) रत्नांशुजालैरित्यादीनि राजमेरुसाधारण्येन योज्यानि।

(३४) वदन्तौ तौ इत्युक्तया राज्ञापि तस्याः शोभा वर्णितेति गम्यते।

(३५) ( महाराज्ञीं वधूमिति यावत्। महाराजो वर इति) काञ्चनोपललक्षणे पर्यंके निविष्ट उपविष्टः।

(३६) तत्तद्भूषणोचितस्थानके अर्पितैः।

(३७) कामकान्ता रतिरिव च।

(३८) नवोदितेत्यनेन पूर्वलक्ष्म्या जरतीत्वेन शोभापकर्षो व्यज्यते।

(३९) तत्ते मङ्गलं मया सहेति शेषः।

(४०) स्तनसदृशः पद्मकोशः। अनुरागसदृशा अंकुराश्च हृदि यस्याः। 'आपं चैव हलन्तानामिति' भागुरिमतेन टाप्। लोलानि नीलोत्पलानीक्षणानीव यस्याः। आमोदैः शुभा भ्रमरझांकारा यस्यास्तथाविधा पद्मिनीव सा त्वं स्थितेत्यर्थः।

(४१) इदानीं तां कल्पलतात्वेन रूपयति—सुरक्तेति ( Cf. the Vedic ritual as prevailing in Kashmir—पुष्पवतीः प्रसूमतीः फलिनीरफला उत )॥

(४२) हिमशीतेत्यादीनि पूर्णेन्दुश्रियो मदनिकायाश्च साधारणानि योज्यानि।

(४३) तस्या वेद्या मध्ये वैवाहिकं ज्वलनं प्रतिष्ठाप्य चन्दनदारुभिर्ज्वालयामासतुः। तं ज्वालितज्वालं दक्षिणा-

वर्तशिखत्वाद् दक्षिणस्थं ज्वलनं नियोज्य प्रदक्षिणं कृत्वा तस्याग्नेरग्रे पल्लवविष्टरे विविशतुरिति परेणान्वयः (see verse 44). Next verse, omitted here, reads: स हुत्वा तिललाजानि पावकाय शिखिध्वजः । उत्थायोत्थाय कान्तां स पाणिभ्यां स्वयमाददे (Note the लाजाहोम । लाजानीति नपुंसकत्वमार्षम्)

(४५) भवश्च भवानी च भवौ । पुमान् स्त्रिया इति पुंशेषः। शिवौ मङ्गलस्वरूपौ ।

(४६) परस्परमात्मदाने किं दायं परस्परं ददतुस्तमाह—स्वदायमिति ।

(४८) क्रमात् शास्त्रोक्तक्रमात्—( Cf. Vedic ritual—तूष्णीं हस्तौ विमुच्य ) ॥

( इति नवमः सर्गः )

**Questions :**

(1) Give a detailed description of the marriage – sacrament as you have read in this canto.

(2) Write a note on the conception of marriage hinted at in verse 3—तदिच्छामीति and in other verses in this canto.

(3) Define the status of a Hindu wife as revealed in this canto.

(4) Explain (a) स्वदायं ददतुः (verse. 40)
(b) यद् गौर्याः शम्भुना साधं तत् ते भवतु मङ्गलम् ।

(5) Is marriage a sacrament or a contract according to the view propounded here? Does it permit polygamy or strictly enjoins monogamy ?

(6) Can Civil-marriage take the place of the form of marriage propounded here without violating the ideals of marriage as taught in this canto ?

X

(१) रङ्गेण रञ्जकद्रव्येण ।

(७) परीक्षे परीक्षिष्ये ( वर्तमानसामीप्याल्लट् ) ।

(८) सुरैरप्सरोभिश्च सह वर्तमानं हरिमिन्द्रम् ।

(१०) कदर्थना श्रमः ।

(११) स्वात् स्वर्गात् ।

(१४) पातालेऽपि हरेर्विहारप्रसिद्धेर्जगत्त्रयमिति ।

(१५) किंत्विति—मदभिमतः स्वर्गो भूमात्मैव । स च सर्वत्रैवेति भावः । नियतः परिच्छिन्नः ।

(१६) पूर्णकामत्वादपि मे सर्वत्र सुखमित्याह—सर्वत्रेति ।

(१७) तुच्छं स्वर्गं स्वर्गकं गन्तुं न जानामि न संभावयामि ।

तथाचासंभाव्यविषये आज्ञापनं तवैवानुचितं न तु मम तदकरणमपराध इति भावः।

(१८) पूर्णधियां भोगोपसेवनं भोगानुपसेवनं च समम्। तत्रापि भोगोपसेवनं सज्जनैः प्रारब्धक्षयाय्याचरितमतस्तद्युक्तं मन्ये, इत्यर्थः।

(२०) अहमद्यैव न स्वर्गमागच्छामि, किंतु पुना राज्ये प्रतिष्ठितः, कालेन त्वदरिनिबर्हणादि-प्रयोजनार्थमागमिष्यामीत्याशयेनार्धोक्त्या शिखिध्वजे वदति सति, हे कुम्भ, ते राजाभिप्रेतं पुना राज्यप्राप्तिलक्षणं कल्याणमस्त्विति कुम्भं प्रतिवदन्नन्तर्धिमन्तर्धानमाययौ हरिः॥

( इति दशमः सर्गः )

**Questions.**

1. Explain the meaning of—किंतु सर्वत्र मे स्वर्गो नियतो नतु कुत्रचित्

2. Sikhidhvaja refused to accept the Svarga and stayed in this world-why ?

XI

(१) तामिन्द्रागमनरूपां मायां शममानीय उपसंहृत्य। ह्रियते वशीक्रियते।

(२) समेन आकाशादिना सम आभोगः स्थितिर्यस्य । असंरम्भमसाध्वसम् व्यावहारिकम् अर्घ्यपाद्यादिना पूजनम् उचितोक्त्यादि च कृतवान् ॥

(३) अप्यर्थे एवकारः । केनचिद्रागद्वेषप्रधानप्रपञ्चेन, बुद्धिहारिणा बुद्धिक्षोभकेण ।

(४) गृहीतमङ्गनारूपमिति पदयोः, कण्ठे संकल्पितं कान्तमिति चतुर्थं (vide verse 7) संबन्धः ॥

(७) खिङ्गं विटम् ।

(१०) खे आकाशे द्रुम इव । वधूं भार्यां नेच्छामि ।

(१२) तस्य सत्वेन रागद्वेषवासनाशून्यतया परीक्षित-चित्तेन । उदिताशया हृष्टा ।

(१३) बत इति हर्षे ।

(१४) ते इन्द्रप्रार्थिता भोगाः सिद्धयश्च ।

(१५) चिन्तिता मदभिप्रेताः सकला जीवन्मुक्तलक्षणभूताः शान्तिक्षमाधैर्यतृप्त्यादिरूपा अनिन्दिता महर्द्धय एकमेनं प्रयान्ति प्राप्नुवन्ति आश्रयन्तीति यावत् ।

(१६) तमेवंगुणविशिष्टत्वात् स्ववृत्तान्तस्मारणयोग्यभूतमेनं प्रति स्मारयामि ॥

(१८) युक्ता योगधारणावती । समुद्गकात् संपुटकान्निर्गतेव ।

(१९) प्रणये भर्तृचित्तानुरञ्जने पेशलां चतुराम् ।

(२०) माधवे वसन्ते समुदितां पद्मिनीं कमलिनीमिव, भूमितलात् पुनरुपगतां श्रियमिव, रत्नसंपुटकात् प्रकटितां रत्नश्रियमिव । परिददर्श पुरो ददर्श इत्यर्थः ॥ ( इत्येकादशः सर्गः )

**Questions :—**

(1) Fully explain the meaning of :— च्चिन्तिताः सकला एकं प्रयान्त्येनमनिन्दिताः । मन्ये महद्धयः कान्ता नारायणमिवापरम् ॥

(2) Write in sanskrit—tika form, the meaning of verse 20.

XII

(३) अङ्गेन अवयवसंस्थानेन । अनुनयेन, प्रेम-वाक्-प्रबन्धशैल्या, तस्याः प्रसिद्धेन विलासेन, तस्याः फलामूर्तिरिव दृश्यसे ॥

(४) अकृत्रिमेण सहजेन ॥

(७) परिकरं तादृशधारणानुकूलासनादि ॥

(८-६) पुलकोज्ज्वलतां गतौ बाहू प्रसार्य आलिलिङ्गेति परेणान्वयः (६) । गलदङ्गम् छिन्नावयवम् । चत्वारि क्रियाविशेषणानि ॥

(१०) भावशब्देनात्राभिव्यक्तः परस्परानुरागलक्षणः स्थायि-

भावः यो यादृशो वाचामगोचरः परमानन्दरूपः शृङ्गार रसो बभूव स वक्तुं न शक्यत इत्यन्वयः ॥

(११) दिविस्थौ चन्द्रसूर्यावमायामिव मिलत्तनू पङ्केनार्द्र-मृदा कृताविव। शैलौ एकशिलासमुत्कीर्णपरस्परा-लिङ्गितमूर्ती इव श्लिष्टौ मिलितौ चिरमास्ताम् ॥

(१२) आनन्दातिशयेन मनसो जडीभावेन संशून्यहृदयोपमौ।

(१३) लक्ष्ये लोचनस्थैर्यहेतोर्मनसो जडीभावादेवालक्षस्थित-लोचनं यथा स्यात् तथा आस्ताम् ॥

(१४) रतिनिष्यन्दोऽनुरागरसोऽत्यन्तमाधुर्यादिविशेषण—चतुष्टयविशिष्टः ॥

(१५) भर्त्रर्थेन पुरुषार्थसिद्धिप्रयोजनेन हेतुना ॥

(१६) यया भर्तृस्नेहबुद्ध्या। सा बुद्धिः ॥

(१८) धीः श्रीरित्याद्या दक्षकन्या आकारेण सौन्दर्येण कान्तासु स्त्रीषु श्रेष्ठाः प्रसिद्धास्तास्वपि त्वं प्रथमा श्रेष्ठा सतीवाभिलक्ष्यसे ॥

(१९) कृतार्थायास्ते मनः केन प्रत्युपकारेण परितुष्यति। येन तुष्यति तादृशः प्रत्युपकारो दुर्लभ इति भावः ॥

(२४) प्रत्युपकारेऽहमसमर्थ इत्याह-निरिच्छायाः ॥

(२५) नारीणां सौजन्यादिगुणोत्कर्षचर्चासु प्रथमव्यपदेश्या भविष्यसि ॥

(२६) त्वमेव सती पतिव्रता ॥

(३३) जानासि कर्तव्यतयेतिशेषः । धारयिष्यामि हृदि, संमतोऽस्मीति यावत् ॥

(३४) आहर्तुमाचरितुम् ।

(३५) इमम् आयुःशेषरूपं कालम् ।

(३६) कान्तानामन्तःपुरस्त्रीणां ललामो भूषणभूतो भवामि भविष्यामि ।

(३७) मत्ता हृष्टा वास्तव्याः पुरवासिनो यस्याम् । एतदादीनि पुरीविशेषणानि मधुमासलतालक्ष्मीसाम्योपपादकानि ॥

(४०) यदि ते मया सह भोगेच्छास्ति तर्हि इन्द्रेण प्रार्थिता दिव्यभोगा एव भुज्यन्तां किं मानुषैरिति राजाह— एवं चेदिति ॥

(४३) मिथुने द्वन्द्वे ।

(४५) यथासंस्थानं यथास्थितम् ।

(४६) चिरदंपत्योः प्राचीनजायापत्योः ।

(४७) दिनाचारं सायं संध्याम् । सायंसंध्यां सभास्करामित्युक्ते दिनाचारता । परस्परेप्सितसंभोगाय सोत्कराठावपि निर्वासनत्वादनुत्कण्ठौ ॥

( इति द्वादशः सर्गः )

**Questions:—**

1. Is family—love superior to the pleasures of Svarga ?
2. Explain the meaning of:—अत्यन्तमधुरः स्निग्धः कान्तः स्वकुलयोषिताम् । पुण्यश्चरति निष्यन्दः स्वादुर्नामामृतादपि ॥
3. Reproduce from memory a few verses from this canto, which throw light on the status of wife in an Indian home.

## XIII

(१) जगत्प्रकाशकमणाविव समुदिते सूर्ये ।

(२) जनानामरुणोपान्ते चक्षुषीवाम्बुजाकरे विकसति सति।

(४) राज्याभिषेकाय संकल्पयामास ।

(७) मौनं मुनियोग्यमिदं शान्तं तेज उत्सृज्य शासनयोग्यमिन्द्रादीनां तेजो भर्तुमर्हसि ।

(८) पट्टाभिषेकाभावात् प्रतीहारपदं द्वारपालस्थानं तत्र विनयात् तिष्ठन्तीम् । देवीपदे कृताभिषेकास्थाने ।

(११) योगसिद्ध्या तव सत्यसंकल्पात्संभवम् ।

(१२) नीरन्ध्रीकृतं निरवकाशं कृतं काननं येन ।

(१४) तूर्यारवैः प्रतिध्वनन्तः शैलगुहागहनकोटरा यस्य ।

(१५) यन्मदगन्धमन्ये द्विपा न सहन्ते स गन्धद्विपः ।

(१६) बलं सैन्यम् ॥

(१७) भौमया भूतया।

(१९) तं प्राक्तनमात्मनः स्वस्य प्राङ्नगरान्निर्गत्य मार्गे जानपदैः सह वृत्तं वृत्तान्तसंचयम् ॥

(२०) सामन्तास्तत्तद्देशाधिपत्ये निरूपिता मन्त्रिणः। उदिताशयाः सोत्कण्ठाः।

(२२) लाजाञ्जलीनां पुष्पाञ्जलीनां च व्रातैः। परंपरमुत्तरोत्तरम् ॥

(२३) स्वभूमौ स्वस्थाने अचलं कैलासमिवोच्छ्रितं स्थितम्।

(२४) तैस्तैर्लोकशास्त्रप्रसिद्धैर्दधिदूर्वाक्षतशङ्खवीणाछत्रचामरादिभिर्नृपयोग्यैर्मङ्गलैः संयुतम्।

(२५) अन्तःपुरे स्थानि स्वाभिमतसमाधिभोगादीनि।

(२६) सह चूडालया देहधारणाद् विरतो विदेहकैवल्यसुखे प्रतिष्ठितोऽभूदित्यर्थः।

(२७) भुक्तेषु भोगेषु नीरागा बुद्धिर्यस्य। समेभ्योपि समा दृष्टिर्यस्य। बोधेन कामलक्षणं मृत्युं जित्वा, जम्बूद्वीपे, एकराजस्य भाव ऐकराज्यं चकार ॥

(२८) सत्त्व सन्मात्रं तच्छेशः सन्। विशोकः समाधौ तिष्ठ। अथवा स्वयं प्रसभं भोगमोक्षज्ञानलक्ष्मीरनुसरन्नुत्तिष्ठ व्युत्थितस्तिष्ठ। तव समाधिव्युत्थानयोर्न

फलभेदोऽस्तीत्यर्थः ॥

(२६) न खिद्यसे निवृत्तसर्वखेदोभविष्यसि ।

(३०) बुद्ध्या अवष्टब्धं परमार्थतया दृष्टमवलम्बितं तत्पूर्णानन्दपदं येन ।

(३१) भोगमोक्षमयस्तत्प्रचुरः ॥

( इति त्रयोदशः सर्गः )

**Questions:—**

1. Write notes on राज्याभिषेक— the Consecration of King and the Queen.
2. Form a full estimate of the character of Chūdāla as wife.
3. Discuss the philosophy of भोगमोक्षश्रीः ॥

## APPENDIX.

I subjoin below a short note on the etymology of the word केदार that occurs in the following verse in this work :—

राज्यं ररक्ष भर्तुस्तत् क्रमेण समदर्शनात् ।

यथा कालेन केदारं पक्वं कलमगोपिका: ( 5. 16 )

The etymology of the word Kedāra ( केदार ) is full of importance as it opens to us a long-forgotten chapter of the ancient history of

India. The word **Kedāra** offers, in my opinion, a triangular affinity with Sanskrit, Tamil and the Sumerian language of ancient Mesopotamia, which may be noted as below:-

1. (Sumerian) KADURRU "boundary", derived from the verb Kad-aru, 'to enclose' Example:—
   Nebu-ched-rezzar which may be reconstructed as 'Nabu-kadarru-usur' and translated as, "Nebu, protect my boundary". We know that the stones that marked off the boundary-lines in the Sumer-land, ancient Mesopotamia, were known as Kadarru (stones). I would reconstruct Nabu or Nebu from the Sumerian AN-Abu or In-Abu ? (The divine father). Abu echoing the Tamil Appa (father), and 'In' the vedic Ina (इनः- the Lord). The syncope of the inital vowel led to the form Nabu or Nebu.
2. (Tamil) KAḌ-ARU, more commonly kaḍu=forest. Example :— Arkkadu ( the forest of AR ) modern Arcot. Note the Dravidian Kadi, 'to cut', and the Sanskrit root kad cl, 10. P. (काडयति) 'to tear, to separate or detach' But the roots of the 10th conjugation in Sansk. are mostly derivatives, hence borrowed.
3. (Sanskrit) KEDĀRA (केदार), a field, as

in our text, 'a forest' as in केदारनाथ; a dyke, earth raised to keep out water, basin or a boundary', as in केदार खण्ड.

The question is : How to account for this triangular affinity ? Which of these three languages has the honour to possess the more original word ? I have discussed the subject more fully elsewhere In my opinion, the Akkadians or the Arkadians of Mesopotamia, who were originally a people from South India—Arkadu or modern Arcot, took the word from India to Mesopotamia. The ancient Tamil, therefore, may be the source of the Mesopotamian word, as well as, of the Sanskrit word केदार whose root in Sanskrit is unknown. I, therefore, maintain that the Sanskrit word केदार, like many other words in Sanskrit, is borrowed from the ancient Tamil. It would be out of place here to discuss the implications of a theory such as this, which are fully dealt with in my articles on the Sumerians in the series, "Studies in ancient Indian history."

**Lachhmidhar.**

# ERRATA.

I hope the reader bearing in mind, that it is a case of war-print which is fraught with many difficulties, will forgive the printing-errors that have crept in this publication inspite of proper instructions and make the necessary corrections some of which are noted as below :—

| Page | Verse | Incorrect | Correct |
|---|---|---|---|
| 13 | (Introduction line 9) | वासनाया | वासनायां |
| 14 | ( „ line 22) | add Ref. 3.68.2et. sqq. | |
| 15 | ( „ line 23) | काश्यपः | काश्यप |
| 19 | ( „ line 23) | श्रतः | श्रुतः |
| ७ | २० | अति नर्मलः | अतिनिर्मलः |
| ६ | ११ | प्रपीतामृतसारव | प्रपीतामृतसारेव |
| ३१ | ११ | त्यजास्यहम् | त्यजाम्यहम् |
| ३५ | ४४ | न चोटजादिशोषेण | नचोटजादिशेषेण |
| ४७ | २६ | कूम्भो | कुम्भो |
| ५२ | २२ | पूरे | पूरैं |
| ५३ | २८ | पादयास्ते | पादयोस्ते |
| ६१ | १० | वासकि | वासुकि |
| ६२ | १३ | धनानन्दं | घनानन्दं |

| | | | |
|---|---|---|---|
| ६२ | १६ | स | सा |
| ६६ | ४८ | तैस्त: | तैस्तै: |
| ६७ | ६ | त्थितं | स्थितं |
| ,, | ७ | लोकपालादां | लोकपालानां |
| ८० | ३२ | क्षुधितेभ्यो | क्षुधितेभ्यो |
| ८८ | first line | नानृता | नानृता |
| ८९ | ९४ | बुद्धया | बुद्ध्या |
| ९० | ४ | °मारवादने | °मास्वादने |
| ९२ | (२२-२३) | °च्छुद्धयर्थं | °च्छुद्ध्यर्थं |
| ९२ | (२२-२३) | वह्नि | वह्नि |
| १०१ | ३० | अब्द | अब्दं |
| १०३ | १८ | जन्यत्रम्थानं | जन्यत्रस्थानं |
| १०४ | २५ | loves receives | love receives |
| १०७ | line 6 | enjoins | enjoin |
| १०९ | ३ | बुद्धिहाहिणा | बुद्धिहारिणा |